# INTRODUCTION

The Ṛgarthasāra of Dinakara is a hitherto unpublished commentary on about 200 selected verses of the Ṛgveda. The Commentary, as the author himself mentions, generally follows Sāyaṇa; but occasionally also differs from him (see Introductory Verses)—usually for the better. As an illustration of Dinakara's deviating from Sāyaṇa may be mentioned the commentary on verse No. 33, and some of the verses of the Urvaśī-Purūravas Dialogue (Verses No. 155 to 170). Dinakara usually omits such explanations and remarks of Sāyaṇa, as, in his opinion, are either laboured or unnecessary. The same is also true of the grammatical notes: he improves on Sāyaṇa in many instances. Thus, for example, the formation of the word *kártvam*, occurring in verse No. 5, is explained by Sāyaṇa rather deviously. He first derives a noun *kar*, from the root *kṛ*, to which he attaches the abstract suffix *tva*. Dinakara on the other hand, suggests a far simpler—and a correct—derivation, namely the gerundial suffix *tva* attached directly to the root *kṛ*. This accords also with Pāṇini 3.4.14.

It must, however, be mentioned that in many instances Dinakara's interpertations range on the fantastic, while in quite a few instances his interpretations are unacceptable on grounds of grammar. As an example of fantastic interpretation may be quoted his explanation of verse No. 35 which he unhesitatingly refers to events in Rāma's life! Obviously wrong on grounds of grammar are such interpretations as सुता इति ऋत्विक्संबोधनम् in the commentary to verse 37 (सुता: is Nom. Pl.), or कृषिं कुर्वन् पुरुष: फाले काष्ठे आशितं स्थितं कीटादि in commentary to verse 188 (पदपाठ–फाल:).

The commentary of Dinakara, thus, is to be taken as an easier and often improved version of Sāyaṇa, with occasional lapses into the fantastic (from which Sāyaṇa himself is not comletely free). In some instances, it may also prove helpful in fixing the readings of Sāyaṇa.

Although Dinakara claims that the verses selected by him are the essence of Ṛgveda (ऋग्वेदसारभूतानाम् ऋचाम्, Introd. Verses), we are

unable to detect my logical basis of his selection. The verses have been selected Aṣṭaka-wise, as follows :

| | | | | |
|---|---|---|---|---|
| Aṣṭaka | 1. | — | 86 | verses |
| Aṣṭaka | 2. | — | 13 | verses |
| Aṣṭaka | 3. | — | 6 | verses |
| Aṣṭaka | 4. | — | 2 | verses |
| Aṣṭaka | 5. | — | 1 | verse |
| Aṣṭaka | 6. | — | 1 | verse |
| Aṣṭaka | 7. | — | 4 | verses |
| Aṣṭaka | 8. | — | 94 | verses |

Not only is there no system in this selection, but the order in which the verses are arranged is also not everywhere normal. Thus, for example, after 1·24·11 occur 1·31·14-15 followed by 1·24·15, 1·31·10, 1·27·13, 1·35·2 and 1·33·5 (verses No. 16—23). But these discrepancies may be due to the scribes rather than to the author. The commentary in the latter part of the book is somewhat too brief and occasionally lacunary. The lacunae, where absolutely necessary, have been filled from Sāyaṇa, or, occasionally, have been supplied by us. This additional matter is enclosed within square brackets. The grammatical and exegietical notes are enclosed within round brackets so as to make it convenient to read the comentary uninterrupted.

## The Author

Dinakara mentions the name of his father as Rāmakṛṣṇa (Introductory Verses of the *Ṛgarthasāra*), and of his grandfather as Nārāyaṇa Bhaṭṭa, Son of Rāmeśvara Bhaṭṭa (Colophon to *Śāntisāra,* another work of Dinakara. See Tanjore MSS. Library Catalogue p. 78-94). Rāmeśvarabhaṭṭa is known to be living in the 15th Century. Kamalākara Bhaṭṭa, the author of the *Nirṇayasindhu* was his younger brother and Viśveśvara Bhaṭṭa *alias* Gāgā Bhaṭṭa, who officiated as the High Priest at the coronation of Shivaji in A.D. 1674, was his son. Dinakara's literary activity has been assigned to the period 1575—1640. (See Kane, *History of Dharmaśāstra*, Vol. I. pp. 419-20, 432-40).

Dinakara is known to have written the following works:

1. Karmavipākasāra
2. Prāyaścittasāra
3. Śāntisāra
4. Dinakarodyota
5. Dinakarabhaṭṭīya (A commentary on Śāstradīpikā)
6. Ṛgarthasāra.

No. 4 of the above was left unfinished by Dinakara, and subsequently completed by his son Viśveśvara.

## Critical Apparatus

The present edition of the *Ṛgarthasāra* is based upon the following three MSS.

क MS. No. 1295 of the Central Library, Baroda: written on country-made paper (10″×4½″), 19 folios in all, with 17 to 20 lines on each page and 55 to 60 letters to a line. The verses are given in full only in the first Aṣṭaka: for the rest only the Pratīkas are given. The manuscript is complete and fairly correct. It contains, in addition to the verses and their commentary, selected portions from the *Aitareya Brāhmaṇa* with a running commentary (also by Dinakara). The Manuscript is dated Śaka 1732, Saṁvat 1867, i.e. A. D. 1810. (The Colophon to the *Brāhmaṇa* portion mentions Gāgābhaṭṭa as the younger brother of Dinakara, which is obviously the scribe's mistake. See Kane, Vol. I, pp. 437; 561; 742).

ख Ms. No. 122 of Anup Sanskrit Library, Bikaner: written on country-made pape (10″×4″), 22 folios in all, with 10 to 12 lines per page and about 32 letters per line. The manuscript is incomplete. Both the beginning and the end are missing. It begins with verse No. 9 and ends with verse No. 140. This manuscript calls the work *Ṛgvyākhyānasāra*. It is full of scriptorial mistakes, although it appears to be later than क.

ग No. 77/9 (a) of Osmania University MSS. Collection: written on machine-made paper (8½″×4″), 32 folios, each page containing 17-18 lines with 40 letters per line. The manuscript is complete but full of scriptorial mistakes. Only Pratīkas of the

verses are given. It contains both the *Saṁhitā* and the *Aitaeyra Brāhamaṇa* portions.

In editing the work we have, with the help of Sāyaṇa's commentary, where necessary, corrected the obvious mistakes of the scribes. We did not considnr it necessary to give these mistakes as variant readings. Only such differences as appeared to be of some significance have been noted. As already mentioned, the lacunae have been restored with the help of Sāyaṇa.

We plan to bring out a Second Part of the present work, which will contain the *Brāhmaṇa* portion of the work as well as a translation of the verses in English followed by Grammatical and Exegetical notes. It is our hope that the two parts together will form a good 'Vedic Reader.'

---

**Acknowledgements**

We gratefully acknowledge the help rendered by the authorities of the Central Library Baroda, and the Anup Sanskrit Library, Bikaner, who kindly lent to us the two Manuscripts (क and ख) for editing the present work.

# ERRATA

| पृष्ठम् | पंक्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११ | १९ | म॒घ॑वानो | म॒घवा॑नो |
| १३ | ५ | ऋ॒तुभिध्रु॒वे॑भिः | ऋ॒तुभि॑र्ध्रु॒वैः |
| १७ | २१ | दु॒वा | दे॒वा |
| १८ | २ | प्रक्षिप्त | प्रक्षिप्तं |
| १८ | ४ | भरामु॒ध्मं | भरामे॒ध्मं |
| १८ | २० | पू॒व्यः | पू॒र्व्यः |
| २२ | ६ | ति॑रु॒ह | ति॑रे॒ह |
| २४ | २४ | ७२ | ७३ |
| २५ | २ | ७३ | ७३ A |
| २५ | ७ | ७३ | ७३ A |
| ३२ | ९ | कीर्तिर्म् | कीर्तिम् |
| ३६ | ११ | समदा | समदा॑ |
| ३९ | १६ | मु॒ा | मा॑ |
| ४५ | ८ | मंध्ये | मध्ये |
| ५८ | १४ | शुक्र॒स्य॑ | शु॒क्रस्य॑ |
| ६० | १९ | कृणुते | कृ॒णु॒ते |
| ६२ | २ | भव॑ति | भवति |
| ६४ | २२ | हेमं॑न्ता॒न् | हे॑मु॒न्तान् |

अथ

# ऋगर्थसार:

श्रीगणेशाय नमः ॥ श्री वेदपुरुषाय नमः ॥ हरिःॐ३म् ॥

संसारचक्रे मुनयोऽप्यनाथा यां मातरं मातृुदरे निवासम् ।
नेच्छन्त्युमां तामभिनम्य पात्रं न स्यामहं कस्य मनोरथस्य ॥

श्रीरामकृष्णं पितरं नत्वोमाम्बां च मातरम् ।
ऋग्वेदसारभूतानामृचां भाष्यानुरोधतः ॥

अर्थं ब्रूते दिनकरः क्वचिद् भाष्यविरोधतः ।
लोकरञ्जनसिद्ध्यर्थमनेन प्रीयतां गुरुः ॥

॥ॐ॥ अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।
होता॑रं रत्न॒धात॑मम् ॥१॥ (१.१.१.)

(अस्या मधुच्छन्दा ऋषिः ।) अहम् अग्निम् इळे स्तौमि । कीदृशं, पुरोहितं पुरो धीयते तम् । अथवा देवानां पुरोहितम् । पुनः कीदृशं, यज्ञस्य देवं प्रकाशकम् । (दानाद्दीपनाद्वेति यास्कः ७.१५) पुनः कीदृशम्, ऋत्विजम् ऋतौ वसन्तादिकाले यजति तादृशम् । होतारम् आह्वातारं होमनिष्पादकं वा । पुनः कीदृशं, रत्नधातमं रमणीयानां धनानां दातृतमम् ॥१॥

यद॒ङ्ग दा॒शुषे॒ त्वम॑ग्ने भ॒द्रं क॑रि॒ष्यसि॑ ।
तवेत् तत् स॒त्यम॑ङ्गिरः ॥२॥ (१.१.६)

अङ्ग अग्ने हे अग्ने त्वं दाशुषे दानशीलाय (दाश्‌ दाने इति धातोः दाश्वान् साह्वानिति क्वसुन्प्रत्ययः । पा० ६.१.१२) यद् भद्रं प्रजापश्वादिरूपं कल्याणं करिष्यसि ।

तत् सत्यम् तव इत् तत् तवैव । इच्छब्द एवार्थः । हे अङ्गिरः अङ्गाररूपाऽग्ने । (अङ्गिरा अङ्गाराः इति यास्कात् । ३.१७) यजमानस्य सम्पत्तौ सत्यां पुनरुत्तरक्रत्वनुष्ठानेन तवैव भद्रं भवतीति भावः ॥२॥

स नः पितेव सूनवेऽग्ने सूपायनो भव ।

सचस्वा नः स्वस्तये ॥३॥ (१.१.९)

हे अग्ने सः त्वं नः अस्मदर्थं सूपायनः शोभनम् उपायनं यस्येति तादृशः भव । तथा, नः अस्माकम् स्वस्तये विनाशराहित्यार्थं सचस्व समवेतो भव । क इव, सूपायनः पितेव । पुत्रार्थं यथा पिता [सुप्रापः] तद्वदेव ॥३॥

सं चोदय चित्रमर्वाग् राध इन्द्र वरेण्यम् ।

असदित् ते विभु प्रभु ॥४॥ (१.९.५)

हे इन्द्र वरेण्यं श्रेष्ठं राधः धनं चित्रं मणिमुक्तादिरूपेण बहुविधम् अर्वाक् अस्मदभिमुखं यथा भवति तथा सं चोदय सम्यक् प्रेरय। विभु भोगाय पर्याप्तं प्रभु ततोऽधिकं तादृशं धनं ते तव असत् इत् अस्त्येव, अतो ददस्व ॥४॥

यत् सानोः सानुमारुहद् भूर्यस्पष्ट कर्त्वम् ।

तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥५॥ (१.१०.२)

यत् यदा सानोः सानुम् आरुहत् यजमानः सोमसमिदाद्याहरणार्थम् एकस्मात् पर्वतभागादपरमारूढवान्, तथा भूरि प्रभूतं कर्त्वं कर्तव्यं (कृत्यार्थे त्वन् । पा० ३.४.१४) सोमयागरूपं कर्म अस्पष्ट स्पृष्टवान् उपक्रान्तवान् । तत् तदानीम् इन्द्रः अर्थं यजमानस्य प्रयोजनं चेतति जानाति । ज्ञात्वा च वृष्णिः कामानां वर्षिता सन् यूथेन मरुद्गणेन सह एजति कम्पते गन्तुमुद्युङ्क्ते यज्ञभूमिमित्यर्थः ॥५॥

इन्द्रमीशानमोजसाभि स्तोमा अनूषत ।

सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥६॥ (१.११.८)

स्तोमाः स्तोतारः ऋत्विजः ओजसा बलेन ईशानं जगतो नियामकमिन्द्रम् अभि अनूषत सर्वत्र स्तुतवन्तः। यस्य इन्द्रस्य रातयः धनानि सहस्रं सहस्रसंख्याकानि उत वा अथवा भूयसीः भूयस्यः सहस्रसंख्याधिकाः सन्ति। इन्द्रमिति पूर्वत्रान्वयः ॥६॥

सेमं नः काममा पृण गोभिरश्वैः शतक्रतो।

स्तवाम त्वा स्वाध्यः ॥७॥ (१.१६.९)

हे शतक्रतो सः त्वं नः अस्माकम् इमं कामं गोभिरश्वैश्च सह आ पृण सर्वतः पूरय। वयमपि स्वाध्यः (ध्यै चिन्तायां) सुष्ठु आ सर्वतो ध्यानयुक्ताः सन्तः त्वां स्तवाम। (सेममिति सः इमम्। सोऽचि लोपे चेदिति सुलोपः। पा० ६.१.१३४) ॥७॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम्।

समूळ्हमस्य पांसुरे ॥८॥ (१.२२.१७)

(एताः सोमातिरेकशस्त्रे विनियुक्ताः।) त्रिविक्रमावतारधारी विष्णुः इदं जगत् वि चक्रमे क्रामति स्म। तदा च त्रेधा पदं नि दधे प्रक्षिप्तवान्। अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने इदं जगत् समूळ्हं (वह प्रापणे, निष्ठेति क्तः। पा० ३.२.१०२) प्रविष्टम् ॥८॥

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः।

अतो धर्माणि धारयन् ॥९॥ (१.२२.१८)

अदाभ्यः केनापि हिंसितुमशक्यः (दभ हिंसायाम्) गोपाः पृथ्वीरक्षकः अतः धर्माणि अग्निहोत्रादीनि धारयन् फलदानेन पोषयन् विष्णुः पृथिव्यादिस्थानेषु त्रीणि पदा (सुपां सुलुगिति डादेशः। पा० ७.१.३९) पदानि वि चक्रमे चक्राम ॥९॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे।

इन्द्रस्य युज्यः सखा ॥१०॥ (१.२२.१९)

हे ऋत्विगादयः विष्णोः कर्माणि जगत्पालनादीनि पश्यत। यतः विष्णुप्रसादात् यजमानः व्रतानि अग्निहोत्रादीनि पस्पशे स्पृष्टवान् कृतवान् (स्पश बाधनस्पर्शनयोः)। तादृशश्च विष्णुः इन्द्रस्य युज्यः योग्यः सखा भवति ॥१०॥

तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

दिवीव चक्षुराततम् ॥११॥ (१.२२.२०)

विष्णोः तत् परमं पदं स्थानं सूरयः पण्डिताः शास्त्रदृष्ट्या सदा सर्वदा पश्यन्ति । यथा दिवीव आकाशे इव आततं प्रसृतं (तनु विस्तारे) चक्षुः पदार्थान् विशदं पश्यति । तथा विष्णुपदस्यापि शास्त्रदृष्ट्या दर्शनात् न सन्देहः कर्तव्यः ॥११॥

तद् विप्रासो विपन्यवो जागृवांसः समिन्धते ।

विष्णोर्यत् परमं पदम् ॥१२॥ (१.२२.२१)

पूर्वोक्तं यद् विष्णोः परमं पदं तद् विप्रासः मेधाविनः समिन्धते चेतसि दीपयन्ति । कीदृशाः, विपन्यवः विशेषेण स्तोतारः । (स्तुत्यर्थस्य पनेर्बाहुलक औणादिको युप्रत्ययः ।) पुनः कीदृशाः, जागृवांसः जागरूकाः (जागृ निद्राक्षये) ॥१२॥

सं माग्ने वर्चसा सृज सं प्रजया समायुषा ।

विद्युर्मे अस्य देवा इन्द्रो विद्यात् सह ऋषिभिः ॥१३॥ (१.२३.२४)

हे अग्ने मा मां वर्चसा तेजसा सं सृज संयोजय । तथा प्रजया सं सृज । आयुषा सं सृज । (किं च) देवाः सोमपातारः अस्य मे मम यजमानस्य विद्युः अनुष्ठानं जानीयुः । अपि च ऋषिभिः सह इन्द्रो विद्यात् जानीयात् ॥१३॥

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।

को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥१४॥(१.२४.१)

यूपे बद्धः कांदिशीकः शुनःशेपः कं देवमुपधावामीति संसारं विचिकित्सति । वयं शुनःशेपनामकाः अमृतानां देवानां मध्ये कतमस्य किंजातीयस्य (वा बहूनां जातिपरिप्रश्ने डतमच् । पा० ५.३.९३) कस्य नूनं कस्य वाग्न्यादेश्चारु शोभनं नाम मनामहे

उच्चारयामः (मन ज्ञाने)। को देवः नः अस्मान् मृतप्रायान् पुनरपि मह्यै महत्यै अदितये पृथिव्यै दात् दद्यात् पृथिव्यां स्थापयेदित्यर्थः। येनाहममृतः सन् पितरं मातरं च दृशेयं पश्येयम्। यद्वा कः प्रजापतिरस्मान् स्थापयत्विति प्रार्थना। अस्मिंश्च पक्षे पूर्वार्धमात्रेण विचिकित्सा — हन्ताहं कां देवताम् उपधावामीति ॥१४॥

अग्नेर्वयं प्रथमस्यामृतानां मनामहे चारु देवस्य नाम ।
स नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरं च ॥१५॥
(१.२४.२)

अस्यार्थः स्पष्टत्वान्नोक्तः ॥१५॥

तत् त्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥१६॥
(१.२४.११)

अत्र शुनःशेपो वरुणं प्रार्थयते[1]। हे वरुण त्वा त्वां तत् आयुः यामि याचामि याचे। ([2]यामि याचामीत्यर्थे चलोपश्छान्दसः। वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य चेति बृहद्देवतायाम्। २.११६) ब्रह्मणा वन्दमानः स्तुतिं नमस्कारं वा कुर्वाणोऽहम् (वदि अभिवादनस्तुत्योः)। यजमानोऽपि [हविर्भिः] तदायुराशास्ते प्रार्थयते। त्वं चेह कर्मणि अहेळमानः अनादरमकुर्वाणः अक्रुध्यन् वा (अहेळमानोऽक्रुध्यन्निति यास्कोक्तः ४.४.२५। प्रार्थनायां क्रोधोऽनादरो भवति वा तदुभयं परिहृतम्।) बोधि बुध्यस्व अस्मत्प्रार्थितम् (अहेळमान इति हेळ अनादरे शानच्। बोधीति बुध अवगमने लोटः सेर्हिः। बहुलं छन्दसि (पा० २.४.७३) इति विकरणस्य लुक्। हुझल्भ्यः (पा० ६.४.१०१) इति हेर्धिरित्यादेशः। धातोरन्त्यलोपश्छान्दसः। ननु बोधीति, सेर्ह्यपिच्च (पा० ३.४.८७) इत्यपित्त्वात् सार्वधातुकमपित् (पा० १.२.४) इति अपितो ङित्त्वात् क्ङिति च (पा० १.१.५)

---

१ नव जुहोति यास्क इति। प्रतिमन्त्रमिति कात्यायनेन चयनप्रकरणे वरुणदेवताके होमे विनियुक्तो मन्त्रः (?) इति ख - ग - पुस्तकयोः।

२ ननु याचामीत्यपेक्षितं कथं यामीत्येतत् साधूच्यते? "अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपो भवति" इत्युपगम्य, "अथापि वर्णलोपो भवति, तत्त्वा यामीति" यास्कोक्तेः (२.१.२)। ईमहे यामि मनामहे इत्यादि याच्ञार्थधातुषु पाठाच्च। (निघ. ३.१९.१)। इति ख - पुस्तके।

इति गुणनिषेधात् कथं गुण उच्यते ? वा छन्दसि (पा० ३.४.८८) इति पित्त्वात् पुगन्तलघूपधस्य (पा० ७.३.८६) इति गुणः।) हे उरुशंस बहुभिः स्तुत्य (उरु, तुवि, पुरु, भूरि इति उरुशब्दस्य बहुनामसु पाठात्।) प्रार्थितमायुर्मा प्रमोषीः प्रमुषितं मा कुर्विति। (मुष स्तेये, लोडर्थे लुङ्। छन्दसिलुङ्लङ्लिटः (पा० ३.४.६) इति। वदव्रज (पा०७.२.३) इति प्राप्तायाः वृद्धेः, नेटि (पा० ७.२.४) इति निषेधात् लघूपधगुणः) ॥१६॥

त्वम॑ग्न उरु॒शंसा॑य वा॒घते॑ स्पा॒र्हं यद् रेक्ण॑: पर॒मं व॒नोषि॒ तत्।

आ॒ध्रस्य॑ चि॒त् प्रम॑तिरुच्यसे पि॒ता प्र पाकं॒ शास्सि॒ प्र दिशो॑ वि॒दुष्ट॑रः ॥१७॥

(१.३१.१४)

हे अग्ने उरुशंसाय बहुभिः स्तोतव्याय। उरुः शंसो यस्येति वा। अस्मिन् पक्षे स्वरश्छान्दसः (?)। तादृशाय वाघते ऋत्विजे तदुपकारार्थं स्पार्हं स्पृहणीयं परमम् उत्तमं यद् रेक्णः धनमस्ति तद् धनं वनोषि अनुष्ठाता लभतामिति कामयसे। तथा त्वम् आध्रस्य चित् दुर्बलस्यापि यजमानस्य प्रमतिः प्रकृष्टा मतिर्यस्मात् तादृशः पिता पालक इत्युच्यसे। तथा विदुष्टरः अतिशयेन विद्वान् (अयस्मयादीनि (पा० १.४.२०) इत्यनेन भत्वात्संप्रसारणे षत्वम्) त्वं पाकं शिशुं यजमानं प्रशास्सि प्रकर्षेणानुशिष्टं करोषि। तथा दिशः प्राच्यादिकाः विदुष्टरः प्रशास्सि। त्वदीयशासनाभावे अनुष्ठातॄणां विभ्रमः स्यात्। (देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्निति श्रुतिः। तै० सं० ६.१.५.१) ॥१७॥

त्वम॑ग्ने प्र॒यत॑दक्षिणं॒ नरं॒ वर्मे॑व स्यू॒तं परि॑ पासि वि॒श्वतः॑।

स्वा॒दु॒क्षद्मा॒ यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते॒ सोप॒मा दि॒वः ॥१८॥

(१.३१.१५)

हे अग्ने त्वं प्रयतदक्षिणं पवित्रदक्षिणं नरं मनुष्यं विश्वतः सर्वतः परि पासि परिपालयसि। तत्र दृष्टान्तः। स्यूतं निरिछद्रत्वेन सूचिभिः सम्यङ् निष्पादितं वर्मेव यथा कवचं युद्धे पालयति तद्वत् परिपासि। स्वादुक्षद्मा स्वादून् क्षादयतीति स्वादुक्षद्मा (क्षदतिरत्तिकर्मा अन्तर्भावितण्यर्थः) तथा वसतौ स्वगृहे स्योनकृत् अतिथीनां सुखकारी (स्योनमिति सुखनामेति यास्कः) एतादृशो [यः] यजमानः जीवयाजं जीवाः जीवन्त ऋत्विजः इज्यन्ते दक्षिणाभिः पूज्यन्ते यत्र तं यज्ञं यजते अनुतिष्ठति। सः यजमानः दिवः स्वर्गस्य उपमा दृष्टान्तः। यथा स्वर्गोऽनुष्ठातॄन् सुखयति तथा यजमान ऋत्विगादीनित्यर्थः। यजमानस्योपमानत्वेन स्वर्गादाधिक्ये तात्पर्यम्, तेनाग्नेरपि ॥१८॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।

अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥१९॥(१.२४.१५)

हे वरुण उत्तमं शिरसि स्थितं पाशं मध्यमं नाभिदेशस्थितम् अधमं पाददेशस्थितमपि पाशं (विशब्दोऽप्यर्थः) अस्मत् उत् उत्कृष्य अव श्रथय शिथिलीकुरु। [अथ] हे आदित्य अदितेः पुत्र वरुण वयम् अपि तव व्रते त्वदीयकर्मणि अदितये खण्डनराहित्याय अनागसः अपराधरहिताः स्याम भवेम ॥१९॥

त्वमग्ने प्रमतिस्त्वं पितासि नस्त्वं वयस्कृत् तव जामयो वयम् ।

सं त्वा रायः शतिनः सं सहस्रिणः सुवीरं यन्ति व्रतपामदाभ्य ॥२०॥

(१.३१.१०)

हे अग्ने त्वं प्रमतिः प्रकृष्टा मतिर्यस्य सः नः अस्माकं पिता पालकोऽसि। तथा वयस्कृत् आयुष्यप्रदोऽसि। वयं तव जामयः बन्धवः। [हे] अदाभ्य केनाप्यहिंसनीय शतिनः शतसंख्याकाः तथा सहस्रिणः सहस्रसंख्याकाः रायः धनानि सुवीरं शोभनपुरुषयुक्तं [व्रतपां त्वा सं यन्ति]। पालकत्वाद्युक्त्या धनं देहीत्यत्र तात्पर्यम् ॥२०॥

(शुनःशेपो) विश्वान् देवांस्तुष्टाव—

नमो महद्भ्यो नमो अर्भकेभ्यो नमो युवभ्यो नम आशिनेभ्यः ।

यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥२१॥

(१.२७.१३)

महान्तः गुणैरधिकाः अर्भकाः गुणरहिताः युवानः तरुणाः आशिनाः (अशू व्याप्तौ) वयसा व्याप्ताः वृद्धा इत्यर्थः। चतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमोऽस्तु। यदि शक्नवाम सम्पत्त्या वयं शक्ताश्चेत्तदा देवान् यजामहे। [हे देवाः] ज्यायसः उत्तमस्य शंसं स्तोत्रम् अहं मा वृक्षि विच्छिन्नं मा कार्षम् (ओव्रश्चू छेदने) ॥२१॥

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।

हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥२२॥

(१.३५.२)

सविता सूर्यः कृष्णेन कृष्णवर्णेन रजसा लोकेन अन्तरिक्षमार्गेणेत्यर्थः आ वर्तमानः पुनः पुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थाने स्थापयन् भुवनानि लोकान् पश्यन् अवेक्षमाणः हिरण्ययेन हिरण्मयेन रथेन आ याति अस्मत्समीपमागच्छति । देव इत्यर्थः ॥२२॥

परा चिच्छीर्षा ववृजुस्त इन्द्रायज्वानो यज्वभिः स्पर्धमानाः ।

प्र यद् दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥२३॥

(१.३३.५)

हे इन्द्र ते वृत्रानुचराः शीर्षा स्वशिरांसि परा चित् पराङ्मुखान्येव कृत्वा ववृजुः गतवन्तः। निमित्तं विशेषणेनाह। अयज्वानः [यज्वभिः स्पर्धमानाः] इति। हे हरिवः हरिनामकाश्वयुक्त स्थातः स्थितियुक्त उग्र शौर्ययुक्तेन्द्र त्वं [यत्] यस्मात् अव्रतान् व्रतरहितान् वृत्रानुचरान् दिवः अन्तरिक्षात् [रोदस्योः] द्यावापृथिव्योश्च सकाशात् निः प्र अधमः (ध्मा शब्दाग्निसंयोगयोः) धमनं कृतवानसि। निष्कासितवानिति भावः ॥२३॥

प्र वेपयन्ति पर्वतान् वि विञ्चन्ति वनस्पतीन् ।

प्रो आरत मरुतो दुर्मदाइव देवासः सर्वया विशा ॥२४॥ (१.३९.५)

हे देवासः देवाः वायवः मेरुहिमवदादीन् पर्वतान् प्र वेपयन्ति कम्पयन्ति। तथा वनस्पतीन् वटादीन् वि विञ्चन्ति (विचिर् पृथग्भावे) उत्पाटयन्ति। हे मरुतः यूयं सर्वया विशा प्रजया सहिताः सन्तः प्रो आरत (ऋ गतौ) सर्वतो गच्छत। दुर्मदा इव यथा मदोन्मत्ताः सर्वत्र क्रीडन्ति तद्वत् ॥२४॥

उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।

उप प्र यन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा ॥२५॥(१.४०.१)

( इयं प्रवर्ग्येऽप्यभिष्टवे विनियुक्ता । ) हे ब्रह्मणस्पते एतन्नामक देव अस्मदनुग्रहाय स्वनिवासात् उत्तिष्ठ । देवयन्तः देवान् कामयमानाः वयं त्वा ईमहे याचामहे । सुदानवः शोभनदानयुक्ताः मरुतः उप प्र यन्तु समीपे प्रकर्षेण गच्छन्तु । हे इन्द्र त्वं सचा ब्रह्मणस्पतिना सह प्राशूः सोमस्य प्राशको भव । यद्वा वृत्रस्य हिंसको भव ॥२५॥

मा वो घ्नन्तं मा शपन्तं प्रति वोचे देवयन्तम् ।

सुम्नैरिद् व आ विवासे ॥२६॥ (१.४१.८)

हे मित्रादयो देवाः देवयन्तं देवान् कामयमानं यजमानं यः शत्रुः हन्ति तादृशं घ्नन्तं शत्रुं वः युष्मभ्यं मा प्रति वोचे दुरुक्तकथनभीत्या अहं न कथयामि । तथा [शपन्तं] यजमानं यः शपति तमपि न प्रति वोचे । भवद्भिरेव शिक्षणीयौ तावित्यर्थः । अहं सुम्नैः इत् धनैरेव हेतुभिः वः युष्मान् आ विवासे सर्वतः परिचरामि ॥२६॥

चतुरश्चिद् ददमानाद् बिभीयादा निधातोः ।

न दुरुक्ताय स्पृहयेत् ॥२७॥ (१.४१.९)

दुरुक्ताय न स्पृहयेत् दुष्टं वक्तुमिच्छामपि न कुर्यात् । किन्तु [दुरुक्ताद्] बिभीयात् । अवशिष्टे दृष्टान्तः । चिदित्युपमार्थे । यथा कश्चित् पुरुषः चतुरः चतुःसंख्याकान् कपर्दकान् ददमानात् हस्ते धारयतः प्रक्षिपतो वा कितवात् आ निधातोः कपर्दकनिपातपर्यन्तं बिभीयात्, अस्य जयो भविष्यतीति, तद्वत् । दुरुक्ताद् भेतव्यमित्युपदेशः । (अत्र निरुक्तं– "चतुरोऽक्षान् धारयत इति तद्यथा कितवाद्बिभीयादेवमेव दुरुक्तात् बिभीयान्न दुरुक्ताय स्पृहयेदिति" (३.१६) । ददमानादित्यत्र दद दाने इति धातुर्धारणार्थः) ॥२७॥

उषो ये ते प्र यामेषु युञ्जते मनो दानाय सूरयः ।

अत्राह तत् कण्व एषां कण्वतमो नाम गृणाति नृणाम् ॥२८॥

(१.४८.४)

हे उषः प्रातःकाल दानाभिज्ञाः सूरयो दानपण्डिताः ते तव यामेषु गमनेषु मनः स्वकीयं प्रयुञ्जते दानार्थं प्रेरयन्ति । एषां नृणां दातृणां [तत्] दातृत्वेन प्रसिद्धं नाम कण्वतमः अतिशयेन मेधावी कण्वो महर्षिर्नाम अत्राह अत्रैव उषःकाले गृणात्युच्चारयति । यो नित्यं प्रातः दातुमिच्छति तस्य नाम लोका अपि प्रातर्गृणन्तीति भावः । प्रातःकालस्येयं स्तुतिः ॥२८॥

उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवम् ।

हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥२९॥ (१.५०.११)

मित्रं च तन्महश्च मित्रमहः । मित्रमनुकूलं महस्तेजो दीप्तियुक्त सूर्य अद्यास्मिन् काले उद्यन् उदयं गच्छन् उत्तरां दिवम् अन्तरिक्षम् आरोहन् एवंविधस्त्वं मम हृद्रोगम् आन्तर-व्याधिमाधिं वा हरिमाणं शरीरगतं हरिद्वर्णं च नाशय ॥२९॥

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।

अथो हारिद्रवेषु [illegible]माणं नि दध्मसि ॥३०॥ (१.५०.१२)

मे हरिमाणं शुकेषु पक्षिविशेषेषु रोपणाकासु शारिकासु च दध्मसि स्थापयामः । अथो अपि च हारिद्रवेषु हरितालद्रुमेषु तादृग्वर्णेषु मे हरिमाणं नि दध्मसि निदधीमहि। स हरिमा तत्रैवास्तां अस्मान् मा बाधिष्टेत्यर्थः ॥३०॥

उदगादयमादित्यो विश्वेन सहसा सह ।

द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधम् ॥३१॥ (१.५०.१३)

अयम् आदित्यः विश्वेन सहसा सर्वेण बलेन सह उदगात् उदयं प्राप्तवान्। मह्यं द्विषन्तं रोगं वैरिणं वा रन्धयन् हिंसन् ( रध हिंसायाम् ) अहं द्विषते रोगाय मो रधं नैव हिंसां करोमि। सूर्य एव नाशयत्वित्यर्थः ॥३१॥

मा नो॑ अग्ने स॒ख्या पित्र्या॑णि॒ प्र म॑र्षिष्ठा अ॒भि वि॒दुष्क॒विः सन्।

नभो॒ न रूपं॑ ज॑रि॒मा मि॑नाति पु॒रा त॒स्या अ॒भिश॑स्ते॒रधी॑हि ॥३२॥

(१.७१.१०)

हे अग्ने पित्र्याणि पितरमुपक्रम्यागतानि सख्या सखित्वानि मा प्र मर्षिष्ठाः मा विनाशय। यतस्त्वं कविः [सन्] अभि विदुः सर्वं विद्वान्। जरिमा (जॄष् वयोहानौ) जरा मिनाति ( मिन हिंसायाम् ) आच्छादयतीत्यर्थः। [नभो न] न शब्द इवार्थे। रूपं रूपवन्तः। [यथा] सूर्यरश्मयोऽन्तरिक्षमाच्छादयन्ति तद्वदित्यर्थः। अभिशस्तेः हिंसाहेतोः तस्या जरायाः पुरा अधीहि मां बुध्यस्व। अमृतत्वं प्रयच्छेति भावः ॥३२॥

दे॒वो न यः पृ॑थि॒वीं वि॒श्वधा॑या उप॒क्षेति॑ हि॒तमि॑त्रो न राजा॑।

पु॒रः॒सदः॑ शर्म॒सदो॒ न वी॒रा अ॑नव॒द्या पति॑जुष्टेव॒ नारी॥३३॥(१.७३.३)

यः देवः राजा विश्वधायाः विश्वस्य जगतो धर्ता हितमित्रः अनुकूलमित्रः सन् पृथिवीं न [उपक्षेति] पालयति स राजा न। तस्य पुरः सीदन्तः प्रविशन्तः पुरःसदः वीराः शर्मसदः सुखदातारो न। अनवद्या अनिन्दिता पतिजुष्टा स्वपतिसेविता नारी योषित् यथा मनसः सुखं प्रयच्छति तथा वीराः मनसो न सुखदाः। किन्तु बाह्यमेवानुकूल्यं तेषामिति भावः। मत्कल्पितं व्याख्यानमेतत् ॥३३॥

यान् रा॒ये मर्ता॒न्त्सुषू॑दो अग्ने॒ ते स्या॑म म॒घवा॑नो व॒यं च॑।

छा॒येव॒ विश्वं॒ भुव॑नं सिसक्ष्याप॒प्रि॒वान् रोद॑सी अ॒न्तरि॑क्षम् ॥३४॥

(१.७३.८)

हे अग्ने त्वं यान् मर्तान् मनुष्यान् अस्मानन्यान् वा राये धनाय सुषूदः (षूद प्रेरणे लेटि अडागमः) यज्ञादिषु प्रेरयसि [ते] वयं च त्वत्प्रसादात् मघवानः धनिनः स्याम। ये कर्म

कुर्वन्ति ते धनिनो भवन्तु। वयं तु कर्म कर्तुमशक्ता अपि धनिनः स्याम। रोदसी द्यावापृथिव्यौ अन्तरिक्षं च आपप्रिवान् (प्रा पूरणे) स्वतेजसा वृष्ट्युदकेन धनेन वा आपूरितवान् त्वं विश्वं भुवनं सर्वं जगत् सिसक्षि (षच समवाये) रक्षसीत्यर्थः। छायेव, यथा छत्रादेश्छाया आतपक्लेशं निवार्य रक्षति तद्वत् ॥३४॥

इन्द्र॒ तुभ्य॒मिदं॑द्रि॒वोऽनु॑त्तं वज्रिन् वी॒र्य॑म्।

यद्ध॒ त्यं मा॒यिनं॑ मृ॒गं तमु॒ त्वं मा॒यया॑वधी॒रर्च॒न्ननु॑ स्व॒राज्य॑म् ॥३५॥

(१.८०.७)

हे इन्द्र (इन्दतीति व्युत्पत्त्या) रघुनाथ (!) अद्रिवः अद्रिरिति मेघनाम तद्वत् तच्छायया युक्त मेघश्याम वज्रिन् कठोरबाणधारिन् अनुत्तं शत्रुभिरतिरस्कृतं वीर्यं सामर्थ्यं तुभ्यम् इत् तवैव। यत् यस्मात् ह खलु त्वं तं मायिनं मायावित्वेन प्रसिद्धं (त्यमिति त्यशब्दस्य द्वितीयैकवचनम्।) त्यं लोकोपद्रवकारिणं प्रसिद्धं मृगं मृगरूपधारिणं मारीचं मायया रघुनाथरूपां मायां कृत्वा अवधीः हतवानसि। किंभूतस्त्वं, स्वराज्यं स्वर्गराज्यम् अनु लक्षीकृत्य मृगम् अर्चन् पूजयन्। तन्मारणान्मृगस्य स्वर्गप्राप्तिर्भवितेति भावः ॥३५॥

आ प॑प्रौ पार्थि॑वं रजो॑ बद्बु॒धे रो॑च॒ना दि॒वि।

न त्वावाँ॑ इन्द्र॒ कश्च॒न न जा॒तो न ज॑नि॒ष्यते॑ऽति॒ विश्वं॑ ववक्षिथ ॥३६

(१.८१.५)

इन्द्रः पार्थिवं पृथिव्याः सम्बधि वस्तुजातं रजः अन्तरिक्षलोकं च आ पप्रौ (प्रा पूरणे लिटि, आत औ णलः इत्यौकारादेशः) पूरितवान्। तथा दिवि द्युलोके रोचना रोचमानानि दीप्तानि नक्षत्राणि बद्बधे (बध बन्धने) स्थापितवान्। हे इन्द्र अतः त्वावान् त्वत्सदृशः कश्चन न पूर्वं जातः न च जनिष्यते। अत एव त्वं विश्वं जगत् अति विवक्षिथ अतिशयेन वोढुमिच्छसि नान्य इति भावः ॥३६॥

इन्द्रा॑य नू॒नमर्च॑तो॒क्थानि॑ च ब्रवीतन।

सु॒ता अ॑मत्सु॒रिन्द॑वो॒ ज्येष्ठं॑ नमस्यता॒ सहः॑ ॥३७॥ (१.८४.५)

हे ऋत्विजः नूनं क्षिप्रम् इन्द्राय अर्चत पूजनं कुरुत। उक्थानि स्तोत्राणि च ब्रवीतन [ब्रूत]। सुताः अभिषुताः इन्दवः सोमाः अमत्सुः इन्द्रं मत्तं कुर्वन्तु। अनन्तरं ज्येष्ठं गुणवत्तरं सहः बलवन्तमिन्द्रं नमस्यत नमस्कुरुत। (सुता इति ऋत्विक्सम्बोधनमिति वयम् (!)। ब्रवीतनेति ब्रवीतेर्लोटि तप्तनप्तनथनाश्चेति तनबादेशः) ॥३७॥

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः।

कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥३८॥

(१.८४.१८)

को यजमानः अग्निम् ईट्टे स्तौति। स्तोतुमपि कश्चिन्न समर्थः। को वा अग्निं स्रुचा जुह्वा ध्रुवेभिः ध्रुवैः ऋतुभिः वसन्तादिकालैः उपलक्षितेन घृतेन हविषा यजातै यजेत्। कर्म कर्तुं सुतरामशक्त इत्यर्थः। वीतिहोत्रः अग्निः सुदेवः शोभना देवता इत्यपि को यजमानः मंसते जानाति। देवाः अपि कस्मै यजमानाय होम होतव्यमपि धनम् आशु शीघ्रम् आ वहान् प्रयच्छन्ति। न कस्मा अपीत्यर्थः। यतः कर्म साङ्गं न भवत्यतो देवाः फलं न प्रयच्छन्तीति भावः। (ईट्टे ईड स्तुतौ अदादित्वाच्छपो लुक्। यजातै यजतेर्लेटि आडागमः। वैतोऽन्यत्र (पा० ३.४.९६) इत्यैकारः। वहान् वहतेर्लेटि आडागमः। होमशब्दो मनिन्प्रत्ययान्तो निपातः। मंसते मन ज्ञाने) ॥३८॥

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम्।

न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥३९॥(१.८४.१९)

अङ्ग शविष्ठ बलवत्तम हे इन्द्र देवः द्योतमानः त्वं मर्त्यं मरणधर्माणं त्वां स्तुवन्तं माम् अन्यं वा प्र शंसिषः सम्यगनेन स्तुतमुक्तं कृतमिति प्रशंस। हे मघवन् हे इन्द्र त्वदन्यः त्वत्तोऽन्यः कश्चित् मर्डिता सुखयिता नास्ति। अतः कारणात् ते तुभ्यम् इदं स्तुतिलक्षणं वचः ब्रवीमि उच्चारयामि। (शंसिषः शंसु स्तुतौ। मृड सुखने।) ॥३९॥

स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥४०॥

(१.८९.६)

वृद्धश्रवाः वृद्धं प्रभूतं श्रवः श्रवणं यस्य सः तादृशः इन्द्रो नः अस्माकं स्वस्ति, स्वस्तीत्यविनाशनाम (नि० ३.२१), अविनाशं कल्याणं वा करोतु । विश्ववेदाः विश्वानि वेत्तीति विश्ववेदाः यद्वा विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य सः तादृशः पूषा नः स्वस्ति दधातु । अरिष्टनेमिः अरिष्टः अहिंसितः नेमिः आयुधं यस्य सः एवंभूतश्च तार्क्ष्यः तृक्षपुत्रो गरुत्मान् नः स्वस्ति दधातु ॥४०॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥४१॥ (१.८९.८)

हे देवाः कर्णेभिः श्रोत्रैः भद्रं कल्याणवचनं शृणुयाम श्रोतुं समर्थाः स्याम । भो यजत्राः चरुपुरोडाशादिभिर्यष्टव्या देवाः अक्षभिः नेत्रैः भद्रं कल्याणं शोभनं च पश्येम द्रष्टुं समर्थाः स्याम । स्थिरैः दृढैर्हस्तादिभिरङ्गैः अवयवैः तनूभिश्च युक्ताः वयं तुष्टुवांसः युष्मान् स्तुवन्तः देवहितं देवेन प्रजापतिना स्थापितं यत् आयुः षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा तत् व्यशेम प्राप्नुयाम ॥४१॥

शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् ।

पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥४२॥

(१.८९.९)

हे देवाः अन्ति अन्तिके मनुष्याणां समीपे युष्माभिः शरदः [ शतम् इत् ] शतमेव आयुः कल्पितं नु खलु । तस्मात् गन्तोः आयुषो गमनात् पूर्वं मध्या मध्ये [ नः ] अस्मदीयमायुः मा रीरिषत मा हिंसिष्ट । तत्किमायुः ? यस्मिन्नायुषि यूयं नोऽस्माकं तनूनां शरीराणां जरसं जरां चक्र कृतवन्तः । यत्र च पुत्राः पितरः पालका भवन्ति पितॄणामित्यर्थः । यद्वा पूर्वजन्मस्थाः पुत्राः पितरो भवन्ति पितरश्च पुत्रा भवन्ति । जरादिदोषयुक्तमप्यायुर्मध्ये न हिंसनीयमिति भावः ॥४२॥

अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।

विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम् ॥४३॥

(१.८९.१०)

( अदितिदेवताके पशौ याज्येयम् । ) अदितिः देवमाता पृथिवी वा द्यौः स्वर्गः । सैवान्तरिक्षम् । सैव माता जननी । सैव पिता । सैव पुत्रः । विश्वे देवाः सर्वेऽपि देवाः पृथिव्येव । पञ्च जनाः निषादपञ्चमा वर्णाः यद्वा गन्धर्वाद्याः (तदुक्तं यास्केन—"गन्धर्वाः पितरो देवा असुरा रक्षांसीत्येके, चत्वारो वर्णाः निषादः पञ्चम इत्यौपमन्यवः"(३.८) इति । बह्वृचब्राह्मणे तु "सर्वेषां वा एतत् पञ्चजनानामुक्थं देवमनुष्याणां गन्धर्वाप्सरसां सर्पाणां च पितृणां च" (ऐ. ब्रा. ३.३१) इति ) पञ्चजना अपि सैव । जातं जननं प्रजानामुत्पत्तिरप्यदितिरेव । जनित्वं जन्माधिकरणमपि सैव । ( जनेरौणादिकस्त्वन्प्रत्ययः ) ॥४३॥

अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथाम् ।

सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः ॥४४॥

(१.९३.७)

( गोतमस्यार्षम् । ) हे अग्नीषोमौ प्रस्थितस्य होमार्थमाहवनीयसमीपं नीतस्य हविषः ( कर्मणि षष्ठी ) वीतं भक्षयतम् । तदनन्तरं हर्यतं च अस्मान् कामयेथाम् । हे वृषणा कामानां वर्षितारौ जुषेथाम् अस्मदीयं परिचरणं सेवेथाम् । ततः सुशर्माणा शोभनसुखौ स्ववसा हि शोभनरक्षणौ च अस्माकं भूतं भवतम् । ( लोटि, बहुलं छन्दसि (पा० २.४.७३) इति शपो लुक् । ) अथ अनन्तरं हविर्दत्तवते यजमानाय शं कल्याणं [ योः च ] धत्तं कुरुतम् ॥४४॥

यो अग्नीषोमा हविषा सपर्याद् देवद्रीचा मनसा यो घृतेन ।

तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतम् ॥४५॥

(१.९३.८)

यः यजमानः देवद्रीचा देवपरायणेन मनसा युक्तः सन् हविषा पुरोडाशादिना अग्नीषोमौ सपर्यात् परिचरति । यश्च घृतेनापि परिचरति । तस्य यजमानस्य व्रतं कर्म रक्षतम् । तं च यजमानम् अंहसः पापात् पातं रक्षतम् । विशे यागेषु प्रविशते जनाय यजमानाय महि महत् शर्म सुखं यच्छतं प्रयच्छतम् । ( देवान् अञ्चतीति देवद्र्यङ् । ऋत्विगादिना (पा० ६.२.५९) क्विन् । विष्वग्देवयोः (पा० ६.३.९२) इति टेरद्र्यादेशः) ॥४५॥

अग्नीषोमा सवेदसा सहूती वनतं गिरः ।

सं देवत्रा बभूवथुः ॥४६॥ (१.९३.९)

(पौर्णमासयागेऽग्नीषोमीयस्यानुवाक्या।) हे अग्नीषोमौ यौ युवां देवत्रा देवेषु सं बभूवथुः सम्भावितौ प्रशस्तौ स्थः। 'राजानौ वा एतौ देवानां यदग्नीषोमौ' (तै० सं० २.६.२.१-२) इति श्रुतेः। तौ युवां सवेदसा समानेनैकेन वेदसा हविर्लक्षणेन धनेन युक्तौ सहूती समानाह्वानौ अस्मदीयाः गिरः वाचः स्तुतीः वनतं संभजेथाम्। (वन षण संभक्तौ। देवत्रा, देवमनुष्यपुरुष (पा० ५.४.५६) इत्यादिना सप्तम्यर्थे त्राप्रत्ययः) ॥४६॥

अग्नीषोमावनेन वां यो वां घृतेन दाशति ।

तस्मै दीदयतं बृहत् ॥४७॥ (१.९३.१०)

हे अग्नीषोमौ वां युवयोः अयं यजमानः अनेन घृतेन युक्तं हविः वां युवाभ्यां दाशति प्रयच्छति (दाशृ दाने)। तस्मै यजमानाय बृहत् प्रभूतं धनं दीदयतं प्रकाशयतं प्रयच्छत-मित्यर्थः (दीदयतिः दीप्तिकर्मा) ॥४७॥

अग्नीषोमाविमानि नो युवं हव्या जुजोषतम् ।

आ यातमुप नः सचा ॥४८॥ (१.९३.११)

हे अग्नीषोमौ [युवं] युवां नः अस्मदीयानि इमानि हव्या हवींषि जुजोषतं सेवेथाम्। युवां सचा ब्रह्मणस्पतिना सह [नः] उप आ यातं उपागच्छतम् ॥४८॥

अग्नीषोमा पिपृतमर्वतो न आ प्यायन्तामुस्रिया हव्यसूदः ।

अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमन्तम् ॥४९॥

(१.९३.१२)

हे अग्नीषोमौ नः अस्माकम् अवतः अश्वान् पिपृतं पालयतम्। हव्यसूदः हव्यं क्षीरादि सूदयन्ति दुहन्ति (षूद क्षरणे) उत्पादयन्ति वा तादृश्यः उस्रियाः गावश्चास्मदीयाः आ प्यायन्तां प्रवृद्धाः सन्तु। मघवत्सु इन्द्रतुल्येषु अस्मे अस्मासु बलानि धत्तं स्थापयतम्। तथा नः अस्माकं अध्वरं यागं श्रुष्टिमन्तं धनयुक्तं कृणुतं कुरुतम् ॥४९॥

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया।

भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव ॥५०॥

(१.९४.१)

(आङ्गिरसस्य कुत्सस्यार्षम्। प्रातरनुवाकस्याग्नेये क्रतौ जागते छन्दस्येतत्सूक्तम् आश्विनशस्त्रे च।) अर्हते पूज्याय जातवेदसे जातानां प्राणिनां वेदित्रे जातप्रज्ञाय जातधनाय वाग्नये मनीषया निशितबुद्ध्या इनम् एतत्सूक्तरूपं स्तोमं स्तोत्रं सं महेम सम्यक् पूजितं कुर्मः। (मह पूजायाम्।) रथमिव यथा तक्षा रथं करोति। अस्य अग्नेः संसदि नः अस्माकं भद्रा प्रमतिः प्रकृष्टा बुद्धिर्भवतीति शेषः। हे अग्ने तव सख्ये वयं मा रिषाम हिंसाकर्तारो न भवाम ॥५०॥

यस्मै त्वमायजसे स साधत्यनर्वा क्षेति दधते सुवीर्यम्।

स तूताव नैनमश्नोत्यंहतिरग्ने सख्ये मा रिषामा वयं तव ॥५१॥

(१.९४.२)

हे अग्ने त्वं यस्मै यजमानाय आयजसे देवान् प्रीणासि सः यजमानः साधति स्वाभिलषितं साधयति प्राप्नोतीत्यर्थः। स यजमानः अनर्वा शत्रुभिः अप्रत्यृतः सन् क्षेति ऐश्वर्यं प्राप्नोति। सुवीर्यं शोभनं वीर्यं बलं च दधते धत्ते। स च यजमानः तूताव वर्धते। एनम् यजमानम् अंहतिः दारिद्र्यं न अश्नोति न व्याप्नोति ॥५१॥

शकेम त्वा समिधं साधया धियस्त्वे देवा हविरदन्त्याहुतम्।

त्वमादित्याँ आ वह तान् ह्यु१श्मस्यग्ने सख्ये मा रिषामा वयं तव॥५२



(१.९४.३)

हे अग्ने वयं त्वां समिधं सम्यक् इद्धं कर्तुं शकेम शक्ता भूयास्म। त्वं धियः कर्माणि साधय। त्वे त्वयि आहुतं प्रक्षिप्तं हविः देवाः अदन्ति भक्षयन्ति। त्वम् आदित्यान् अदितेः पुत्रान् देवान् आ वह यज्ञार्थमानय। वयं तान् देवान् हि इदानीम् उश्मसि कामयामहे ॥५२॥

भरामेध्मं कृणवामा हवींषि ते चितयन्तः पर्वणापर्वणा वयम्।

जीवातवे प्रतरं साधया धियोऽग्ने सख्ये मा रिषामा वयं तव ॥५३॥

(१.९४.४)

त्वदर्थमेकविंशतिदार्वात्मकमिध्मं भराम सम्पादयाम। हवींषि पुरोडाशादीनि ते तुभ्यं कृणवाम। किं कुर्वन्तः, पर्वणापर्वणा प्रतिपक्षं दर्शपूर्णमासाभ्यां वयं चितयन्तः त्वमेवां ज्ञापयन्तः। स त्वं जीवातवे अस्माकं जीवनौषधाय धियः कर्माणि प्रतरं प्रकृष्टतरं साधय ॥५३

विशां गोपा अस्य चरन्ति जन्तवो द्विपच्च यदुत चतुष्पदक्तुभिः।

चित्रः प्रकेत उषसो महाँ अस्यग्ने सख्ये मा रिषामा वयं तव ॥५४॥

(१.९४.५)

अस्य अग्नेः जन्तवो [जाताः] रश्मयः विशां प्राणिनां गोपाः रक्षकाः सन्तः चरन्ति उद्गच्छन्ति। तदनन्तरं यत् च द्विपत् द्विपाद् मनुष्यादिकम् उत अपि चतुष्पत् चतुष्पाद् गवादिकम् अस्ति तदुभयम् अक्तुभिः अञ्जकैरस्य रश्मिभिराश्लिष्टमभूदिति शेषः। चित्रः विचित्रदीप्तियुक्तः प्रकेतः अन्धकारावृतानां घटादीनां ज्ञापयिता उषसः उषोदेवतायाः अपि महान् त्वम् असि। उषा रात्रिचरमभागे प्रकाशयति अग्निस्तु सर्वस्यां रात्राविति भावः। (गोपाः गुपू रक्षणे इत्यस्माद् गुपूधूप (पा० ३.१.२८) इत्याप्। पादः पत् (पा० ६.४.१३०) इति पद्भावः) ॥५४॥

त्वमध्वर्युरुत होतासि पूर्व्यः प्रशास्ता पोता जनुषा पुरोहितः।

विश्वा विद्वाँ आर्त्विज्या धीर पुष्यस्यग्ने सख्ये मा रिषामा वयं तव ॥५५

(१.९४.६)

त्वम् अध्वर्युः अध्वरस्य नेता आध्वर्यवस्य वा कर्तासि उतापि पूर्व्यः मुख्यः होता देवानामाह्वाता हौत्रस्य कर्तासि। प्रशास्ता प्रकर्षेण शिक्षको मैत्रावरुणो वा पोता यज्ञस्य

पावयिता ऋत्विग्विशेषो वा असि। तथा जनुषा जन्मना स्वाभाव्येन पुरोहितः [पुरः] आगामिनि स्वर्गादौ [हितः] अनुकूलः। यद्वा आहवनीयरूपेण पूर्वस्यां दिशि स्थापितोऽसि। भो धीर विश्वा सर्वाणि आर्त्विज्या ऋत्विक्कर्माणि विद्वान् जानन् पुष्यसि न्यूनाधिकभावराहित्येन सम्पूर्णानि करोषि ॥५५॥

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित् सन् तळिदिवाति रोचसे।
रात्र्याश्चिदन्धो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥५६
(१.९४.७)

हे अग्ने यः त्वं सुप्रतीकः शोभनाङ्गः विश्वतः सर्वस्मादपि सदृङ् सदृशः अन्यूनो भवसि। सः त्वं दूरे चित् सन् दूरेऽपि वर्तमानः सन् तळिदिव निकटे वर्तमान इव अति रोचसे अतिशयेन दीप्यसे। तदुक्तं यास्केन, "दूरेऽपि सन्नन्तिक इव संदृश्यसे" इति (३.११)। हे देव द्योतमान रात्र्याः चित् रात्रेरपि अन्धः अन्धकारम् अति अतिक्रम्य पश्यसि प्रकाशसे (सदृङ्, दृग्दृशवतुषु (पा० ६.३.८९) इति समानस्य सभावः) ॥५६॥

पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥५७॥
(१.९४.८)

हे अग्न्यवयवभूता देवाः सुन्वतः सोमाभिषवं कुर्वतः यजमानस्य रथः पूर्वः अयजमानानां रथेभ्यो मुख्यो भवतु। अपि च अस्माकं शंसः शंसनीयम् अभिशापरूपं पापं दूढ्यः दुष्टं ध्यायन्तीति दुर्धियः (ध्यै चिन्तायाम्) पापबुद्धीन् शत्रून् अभ्यस्तु अभिभवतु। तत् वचः तदिदं मद्वाक्यम् आ जानीत अवगच्छत। उत अपि च मद्वाक्यम् पुष्यत तदर्थाचरणेन प्रवर्धयत ॥५७॥

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अन्ति वा के चिदत्रिणः।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥५८॥
(१.९४.९)

हे अग्ने त्वं वधैः हननसाधनखड्गाद्यायुधैः दुःशंसान् दुःखेन कीर्तनीयान् दूढ्यः दुःशत्रून् अप जहि वधं प्रापय। ये के चित् अत्रिणः अत्तारो राक्षसादयः दूरे समीपे वा वर्तन्ते तानप्यप जहि। अथ यज्ञाय यज्ञार्थं गृणते त्वां स्तुवते यजमानाय सुगं शोभनं मार्गं कृधि कुरु। ( वधैः हनश्च वध (पा० ३.३.७६) इति हन्तेः करणे अप् वधादेशश्च। जहि हन्तेर्जः (पा० ६.४.३६) इति जादेशः ) ॥५८॥

यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥५९॥
(१.९४.१०)

हे अग्ने त्वम् अरुषा रोचमानौ रोहिता रोहितसंज्ञकौ स्वस्याश्वौ ( रोहितोऽग्नेः (नि० १.१५.२) इति दर्शनात्। रोहितेन त्वाग्निर्देवतां गमयतु (तै. सं. १.७.४.३) इति मन्त्रवर्णाच्च। ) वातजूता वातस्येव जूतो वेगो ययोस्तौ ईदृशावश्वौ रथे यत् यदा अयुक्थाः (युजिर् योगे) अयोजयः तदा वनानि दहतः ते वृषभस्येव सेचनसमर्थोक्षस्येव रवः शब्दो भवति। आत् किंच धूमकेतुना धूमः केतुः प्रज्ञारूपो यस्य तादृशेन रश्मिना धूमलक्षणेन वा चिह्नेन वनिनः वनसम्बन्धान् वृक्षान् इन्वसि व्याप्नोषि। (इवि व्याप्तौ भौवादिकः) ॥५९॥

अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत् ते यवसादो व्यस्थिरन्।
सुगं तत् ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥६०॥
(१.९४.११)

हे अग्ने अथ ते वनप्रवेशानन्तरं स्वनात् त्वदीयपूर्वोक्तगम्भीरशब्दात् (उतशब्दोऽप्यर्थः) पतत्रिणः पक्षिणः [अपि] बिभ्युः भयं प्राप्नुवन्ति। ते [तव] द्रप्साः ज्वालैकदेशाः यवसादः तृणानामत्तारः सन्तो यत् यदा व्यस्थिरन् विविधमवतिष्ठन्ते तत् तदा वनं ते तव तावकेभ्यः रथेभ्यः त्वदीयरथेभ्यश्च सुगं सुखेन गन्तुं शक्यं भवति। तृणादिदाहादिति भावः ॥६०॥

अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥६१॥
(१.९४.१२)

अयम् अग्नेः स्तोता अहरभिमानिनो मित्रस्य राज्यभिमानिनो वरुणस्य च धायसे धारणाय अवस्थापनाय भूतु भवतु। अवयातां स्वर्गलोकाद्गच्छतां मरुतां देवानां हेळः क्रोधः अद्भुतः महान् भवति। मित्रावरुणयोः स्थितावन्तरिक्षस्थेभ्यो देवेभ्यो न भयमित्यर्थः। हे अग्ने नः अस्मान् सु मृळ सुष्ठु मृडय सुखयेत्यर्थः। एषां च मरुतां मनः पुनः [भूतु] प्रसन्नं भवतु। (धायसे वहिहाधाञ्भ्यश्छन्दसि (उणा० ४.६७०) इति भावेऽसुन्। निदित्यनुवृत्तौ आतो युक् चिण्कृतोः (पा० ७.३.३३) इति युक्) ॥६१॥

देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे।

शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥६२॥

(१.९४.१३)

हे अग्ने देवः द्योतमानस्त्वं सर्वेषां देवानाम् अद्भुतः महान् मित्रः असि। तथा वसूनां द्रव्याणाम् अध्वरे वसुः निवासयिता असि। वसु देहीति भावः। वयं तव त्वत्सम्बन्धिनि सप्रथस्तमे अतिशयेन महति शर्मन् शर्मणि गृहे स्याम वर्तमाना भवेम। यद्वाऽस्मत् तव सुखं भवतु ॥६२॥

तत् ते भद्रं यत् समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः।

दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥६३॥

(१.९४.१४)

हे अग्ने यत् त्वं स्वे दमे स्वकीये उत्तरवेदिस्थाने ("तस्यैष स्वो लोको यदुत्तरवेदीनाभिः" (ऐ. ब्रा. १.२८) इति ब्राह्मणे) समिद्धः प्रज्वलितः सोमाहुतः सोमेन सन्तर्पितः अत एव मृळयत्तमः अतिशयेन सुखयिता जरसे ऋत्विग्भिः स्तूयसे तत् ते भद्रं युक्तमित्यर्थः। त्वं दाशुषे यजमानाय रत्नं रमणीयं कर्मफलं द्रविणं धनं च दधासि प्रयच्छसि। (जरतिः स्तुतिकर्मा, व्यत्ययेन कर्मणि कर्तृप्रत्ययः) ॥६३॥

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता।

यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥६४॥

(१.९४.१५)

हे अदिते अखण्डनीयाग्ने त्वं यस्मै यजमानाय सर्वताता सर्वासु कर्मततिषु अनागास्त्वम् अनपराधत्वम् अपापत्वं ददाश प्रयच्छसि सः सुद्रविणः समृद्धो भवति। यं च यजमानं भद्रेण कल्याणेन शवसा बलेन चोदयासि संयोजयसि सोऽपि समृद्धो भवति। [वयं] प्रजावता पुत्रपौत्रैर्युक्तेन ते राधसा त्वया दत्तेन धनेन युक्ताः स्याम। (सर्वताता सर्वदेवात् (पा० ४.४.१४२) इति तातिल् स्वार्थे) ॥६४॥

स त्वमग्ने सौभगत्वस्य विद्वानस्माकमायुः प्र तिरेह देव।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः॥६५॥

(१.९४.१६)

हे अग्ने देव सः त्वम् अस्माकं सौभगत्वस्य सौभाग्यं विद्वान् इह अस्मिन् कर्मणि लोके च अस्माकम् आयुः प्र तिर वर्धय। (प्रपूर्वस्तिरतिर्वर्धनार्थः। मह पूजायाम्। उतेति समुच्चये। तदिति पठनीयानि पदानि?) ॥६५॥ इत्याश्विनशस्त्रसूक्तम् ॥

नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षाम्।

सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन् द्रविणोदाम् ॥६६॥

(१.९६.७)

नू च इति निपातः अद्य इत्यर्थे। देवाः नू च अस्मिन् काले पुरा च रयीणां धनानां सदनम् आवासस्थानं, जातस्य उत्पन्नस्य जायमानस्य उत्पद्यमानस्य च क्षां निवासभूतं, सतः विद्यमानस्याकाशादेः भवतः च सद्भावं प्राप्नुवतश्च भूरेः असंख्यातस्य भूतजातस्य गोपां गोपायितारं द्रविणोदां धनप्रदमग्निं धारयन् हविर्वोढृत्वेन धारयन्ति ॥६६॥

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः।

स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥६७॥

(१.९९.१)

वयं जातानां वेदित्रे जातवेदसेऽग्नये सोमं सुनवाम अग्निं [यष्टुम्] अभिषुणुयाम। सोऽग्निः अरातीयतः शत्रोः वेदः धनं नि दहाति निदहतु। सोऽग्निः नः अस्माकं विश्वा सर्वाणि दुर्गाणि दुर्गमनानि दुःखानि तथा दुरिता दुःखहेतुभूतानि पापानि च अति पर्षत् अतिपारयतु। नावा इव, यथा कर्णधारः सिन्धुं सत्त्वैराकुलितां नदीं नावा तारयति।

(अत्र निरुक्तम् "जातवेदाः कस्मात् जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो वा जातविद्यो वा जातप्रज्ञो वा। यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति हि ब्राह्मणम्" (निरु. ७.१९)। अरातीयतः उपमानादाचारे (पा० ३.१.१०) इति क्यच्) ॥६७॥

इन्द्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे।

रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥६८

(१.१०६.१)

(कूपे पतितः कुत्सः प्रार्थयते। सप्तर्चं वैश्वदेवम्।) वयम् इन्द्रादीन् ऊतये रक्षणाय हवामहे आह्वयामहे। मारुतं शर्धः बलं च हवामहे आह्वयामहे। [हे] वसवः निवासयितारः सुदानवः शोभनदाना इन्द्रादयः विश्वस्मात् सर्वस्मात् अंहसः पापात् नः अस्मान् निष्पिपर्तन निर्गमय्य पालयत। यथा दुर्गात् दुर्गमात् स्थलात् सारथयो रथं निर्गमय्य पालयन्ति। (न इवार्थे। पिपर्तन तप्तनप्तनथनाश्च (पा० ७.१.४५) इति तनबादेशः) ॥६८॥

त आदित्या आ गता सर्वतातये भूत देवा वृत्रतूर्येषु शंभुवः।

रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥६९

(१.१०६.२)

हे आदित्याः देवाः ते यूयं सर्वतातये सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय युद्धे साहाय्यं कर्त्तुमित्यर्थः आ गत आगच्छत। अपि च वृत्रतूर्येषु (संग्रामनामैतत्) युद्धेषु शंभुवः सुखस्य भावयितारः भूत भवत। (गमेर्लोटि, बहुलं छन्दसि (पा० २.४.७३) इति शपो लुक्) ॥६९॥

अवन्तु नः पितरः सुप्रवाचना उत देवी देवपुत्रे ऋतावृधा।

रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥७०

(१.१०६.३)

सुप्रवाचनाः सुखेन प्रवक्तुं स्तोतुं शक्याः पितरः अग्निष्वात्तादयः नः अस्मान् अवन्तु रक्षन्तु। उत अपि च देवपुत्रे सर्वे देवाः पुत्रस्थानीयाः ययोस्ते ऋतावृधा ऋतस्य यज्ञस्य

वा वर्धयित्र्यौ देवी द्यावापृथिव्यौ च नः रक्षतन्। ( ऋतावृधा वृधेरन्तर्भावितण्यर्थे क्विप्। सुपां सुलुक् (पा० ७.१.३९) इति विभक्तेराकारः ) ॥७०॥

नराशंसं वाजिनं वाजयन्निह क्षयद्वीरं पूषणं सुम्नैरीमहे ।

रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥७१

(१.१०६.४)

नराशंसं नरैः शंसनीय वाजिनम् अन्नवन्तम् अग्निं वाजयन् उपवाजयन् प्रज्वलयन् इह अस्मिन् काले स्तौमीति शेषः। तथा क्षयद्वीरम् अतिबलिनं यस्मिन् सर्वे वीराः क्षीयन्ते एवंरूपं पूषणं पोषकं देवं सुम्नैः सुखकरैः स्तोत्रैः ईमहे याचामहे। अभीष्टमिति शेषः ॥७१॥

बृहस्पते सदमिन्नः सुगं कृधि शं योर्यत् ते मनुर्हितं तदीमहे ।

रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥७२

(१.१०६.५)

हे बृहस्पते त्वं सदमित् सदैव नः अस्माकं सुगं सुखं कृधि कुरु। अपि च ते तव यत् स्वभूतं शं रोगाणामुपशमनं योः भयानां पृथक्करणं मनुर्हितं मनुना ब्रह्मणा हितं त्वयि अवस्थापितं, यद्वा मनुष्याणामनुकूलं, यत् अस्ति तदीमहे याचामहे। ( सुष्ठु गम्यतेऽस्मिन्निति सुगम्। सुदुरोरधिकरणे (वा० ३.२.४८) इति गमेर्डः। शं योरित्येतत् पदद्वयं यास्केनैवं व्याख्यातं, "शमनं च रोगाणां यावनं च भयानाम्" (नि० ४.२१) इति ) ॥७२॥

इन्द्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये ।

रथं न दुर्गाद् वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥७३

(१.१०६.६)

काटे कूपे निबाळ्हः नियातितः कुत्सः ऋषिः ऊतये रक्षणाय इन्द्रम् अह्वत् आह्वयति स्म। कीदृशं, वृत्रहणं वृत्राणां हन्तारम्। शच्याः पतिं शचीपतिम् यद्वा शचीति कर्मनाम कर्मणां पालयितारम्। ( निबाळ्हः बाह्व प्रयत्ने नीत्युपसर्गवशात् पतने वर्तते। अह्वत् लिपिसिचिह्वश्च (पा० ३.१.५३) इति लुङि च्लेरङादेशः। आतो लोप (पा० ६.४.६४) इत्याकारलोपः ) ॥७३॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन् ।

तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥७३॥
(१.१०६.७)

अदितिः देवी देवमाता देवैः पुत्रैः सह नः अस्मान् नि पातु रक्षतु । देवः दीप्यमानः त्राता सर्वेषां रक्षकः सविता अप्रयुच्छन् अप्रमाद्यन् नः त्रायतां पालयतु । (त्रैङ् पालने । अप्रयुच्छन् युच्छ प्रमादे । ऋग्विधानेऽस्य प्रयोगः – "जपन्निन्द्रमिति स्नातो वैश्वदेवं तु सप्तकम् । मुच्यते जुहुयादाज्यं विश्वस्मादेव सोंऽहसः" (ऋग्वि० १.२७–२८) इति)॥७३॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः ।

यथा शमसद् द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरम् ॥७४॥
(१.११४.१)

वयं तस्मै प्रसिद्धाय तवसे प्रवृद्धाय कपर्दिने जटिलाय क्षयद्वीराय क्षपितप्रतिपक्षाय रुद्राय मतीः मननीयाः इमाः स्तुतीः प्र भरामहे प्रकर्षेण निष्पादयामः । यथा द्विपदे अस्मै मनुष्याय चतुष्पदे गवाश्वप्रभृतये च शं कल्याणम् असत् भवेत् । यथा च अस्मिन् अस्मदीये ग्रामे विश्वं सर्वं प्राणिजातम् अनातुरं रोगरहितं पुष्टं च भवेत् [तथा] स्तौमी-त्यर्थः । (तवसे तवतिर्वृद्ध्यर्थः । असत् अस भुवि लेटि अडागमः । इतश्च लोपः (पा० ३.४.९७) इति इकारलोपः ) ॥७४॥

मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।

यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥७५॥
(१.११४.२)

हे रुद्र त्वं नः अस्मान् मृळ सुखय । उत अपि च नः अस्माकं मयः सुखं कृधि कुरु । वयं क्षयद्वीराय क्षपितप्रतिपक्षाय ते तुभ्यं नमसा नमस्कारेण विधेम परिचरेम । अपि च हे रुद्र पिता उत्पादकः मनुः यत् शं रोगाणां शमनं योश्च भयानां यावनं च आयेजे स्वप्रजाभ्यो दत्तवान् तत् तव प्रणीतिषु प्रकृष्टनयनेषु सत्सु अश्याम व्याप्नुवाम ॥७५॥

अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः ।

सुम्नायन्निद् विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥७६॥

(१.११४.३)

हे मीढ्वः सेक्तः कामाभिवर्षक रुद्र क्षयद्वीरस्य क्षपितप्रतिपक्षस्य ते तव सुमतिं कल्याणीमनुग्रहस्य बुद्धिं ते त्वत्सम्बन्धिनो वयं देवयज्यया भवत्सेवया अश्याम प्राप्नुयाम । त्वं च सुम्नायन् सुम्नं सुखमिच्छति सुम्नायति एतादृश एव सन् अस्माकं विशः प्रजा अभिलक्ष्य आ चर आगच्छ । वयम् अरिष्टवीराः अहिंसितप्रजाः सन्तः ते तुभ्यं हविः चरुपुरोडाशादिकं जुहवाम प्रक्षिपाम । (मीढ्वः मिह सेचने, दाश्वान् साह्वान् (पा. ६.१.१२) इति क्वसुप्रत्ययान्तो निपातः) ॥७६॥

त्वेषं वयं रुद्रं यज्ञसाधं वङ्कुं कविमवसे नि ह्वयामहे ।

आरे अस्मद् दैव्यं हेळो अस्यतु सुमतिमिद् वयमस्या वृणीमहे॥७७॥

(१.११४.४)

वयम् अवसे रक्षणाय रुद्रं नि ह्वयामहे आह्वयामः । कीदृशं, त्वेषं दीप्तं यज्ञसाधं यज्ञसाधितारं वङ्कुं कुटिलगन्तारं कविं क्रान्तदर्शिनम् । स च रुद्रः दैव्यं देवसंबन्धिनं हेळः क्रोधम् अस्मत् आरे अस्मत्तो दूरे अस्यतु प्रेरयतु । अस्य रुद्रस्य सुमतिम् अनुग्रहरूपां बुद्धिम् इत् एव वयम् आ वृणीमहे । (यज्ञसाधनं राध साध संसिद्धौ । वङ्कुं वकि कौटिल्ये । नि ह्वयामहे, निसमुपविभ्यो ह्वः (पा० १.३.३०) इत्यात्मनेपदम्) ॥७७॥

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।

हस्ते बिभ्रद् भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥७८॥

(१.११४.५)

वराहं कृष्णवराहं (?) यद्वा वराहवद् दृढाङ्गम् अरुषं रोचमानं कपर्दिनं जटायुक्तं त्वेषं दीप्यमानं रूपं वेदान्तैर्निरूपणीयं रुद्रं नमसा नमस्कारेण दिवः स्वर्गात् नि ह्वयामहे आह्वयामः । स रुद्रः स्वहस्ते वार्याणि सर्वैर्वरणीयानि भेषजा भैषज्यानि बिभ्रत् धारयन् अस्मभ्यं स्तोतृभ्यः शर्म सुखं वर्म कवचं छर्दिः गृहं च यंसत् प्रयच्छतु ॥७८॥

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनम् ।

रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥७९॥

(१.११४.६)

इदं स्तुतिवचः मरुतां देवानां पित्रे रुद्राय उच्यते उच्चार्यते। कीदृशं, स्वादोः मधुघृतादेरपि स्वादीयः स्वादुतरं वर्धनं स्तुत्यस्य प्रवर्धकम् । स्तुत्या सर्वोऽपि वर्धत इति भावः। अपि च हे अमृत मरणरहित मर्तभोजनं मर्तानां मनुष्याणां पर्याप्तमन्नं नः अस्मभ्यं रास्व प्रयच्छ (रा दाने)। तथा (त्मने इत्यादिपदेषु द्वितीयार्थे चतुर्थी, तेन) आत्मानं तोकं पुत्रं तनयं नप्तारं पुत्रपुत्रं च मृळ सुखय ॥७९॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ।

मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः॥८०॥

(१.११४.७)

हे रुद्र नः अस्माकं मध्ये महान्तं वृद्धं पूज्यं मा वधीः मा हिंसीः । तथा नः अर्भकं बालं मा हिंसीः । तथा नः उक्षन्तं सेक्तारं युवानं मा हिंसीः । तथा नः उक्षितं गर्भरूपेण निषिक्तमपत्यं मा हिंसीः । तथा पितरं मातरं च मा वधीः । तथा नः प्रियाः स्नेहविषयाः तन्वः शरीराणि तनुषु भवाः प्रजा वा मा रीरिषः मा हिंसीः (रिष हिंसायाम् ) ॥८०॥

मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।

वीरान् मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित् त्वा हवामहे

॥८१॥ (१.११४.८)

हे रुद्र नः अस्माकं तोके पुत्रे तनये पौत्रे आयौ मनुष्ये गोषु अश्वेषु च मा रीरिषः मा हिंसीः । तथा नः वीरान् भामितः क्रुद्धः सन् मा वधीः । वयं च हविष्मन्तः हविर्भिर्युक्ताः सन्तः सदम् इत् सर्वदैव त्वां हवामहे आह्वयामहे । (भामितः भाम क्रोधे, क्तोऽधिकरणे च (पा. ३.४.७६) इति कर्तरि क्तः) ॥८१॥

उप॑ ते॒ स्तोमा॑न् पशु॒पाइ॒वाक॑रं॒ रास्वा॑ पितर्मरुतां सु॒म्नम॒स्मे ।

भ॒द्रा हि ते॑ सुम॒तिर्मृ॑ळ॒यत्त॒माथा॑ व॒यमव॒ इत् ते॑ वृणीमहे ॥८२॥

(१.११४.९)

हे रुद्र ते तुभ्यं स्तोमान् स्तुतिरूपान् मन्त्रान् उपाकरम् उपाकरोमि समर्पयामि। तत्र दृष्टान्तः। पशुपाइव। यथा पशुपाः पशूनां पालयिता प्रातःकाले स्वस्मै समर्पितान् पशून् सायंकाले स्वामिभ्यः प्रत्यर्पयति, एवं त्वत्सकाशाल्लब्धान्मन्त्रान् तुभ्यमेव समर्पयामः। हे मरुतां पितः अस्मे अस्मभ्यं सुम्नं सुखं रास्व देहि। अपि च ते त्वदीया सुमतिः कल्याणी बुद्धिः मृळयत्तमा अतिशयेन सुखयितृतमा अत एव भद्रा भजनीया। हि एतस्मात् अथ अनन्तरं वयं ते इत् त्वदीयमेव [अवः] रक्षणं वृणीमहे वरयामहे ॥८२॥

आ॒रे ते॑ गो॒घ्नमु॒त पू॑रुष॒घ्नं क्षय॑द्वीर सु॒म्नम॒स्मे ते॑ अस्तु ।

मृ॒ळा च॑ नो॒ अधि॑ च ब्रूहि दे॒वाधा॑ च नः॒ शर्म॑ यच्छ द्वि॒बर्हा॑ः ॥८३॥

(१.११४.१०)

हे क्षयद्वीर क्षपितप्रतिपक्ष ते त्वदीयं गोघ्नं गोहननसाधनमायुधं तथा पुरुषघ्नं वा खड्गायुधम् आरे अस्मत्तो दूरे अस्तु। अपि च ते त्वदीयं सुम्नं सुखम् अस्मे अस्मासु अस्तु भवतु। अपि च नः अस्माकं मृळ प्रसन्नो भव। अथ च अनन्तरं च नः अस्मान् अधि ब्रूहि अधिवचनं पक्षपातवचनं ब्रूहि। अपि च द्विबर्हाः द्वयोः स्थानयोः पृथिव्यामन्तरिक्षे च यद्वा दक्षिणोत्तरमार्गयोः यद्वा ज्ञानकर्मणोः बर्हते प्रवर्धते एवंभूतस्त्वं हे देव नः अस्मभ्यं शर्म सुखं यच्छ ॥८३॥

अवो॑चाम॒ नमो॑ अस्मा अव॒स्यव॑ः शृ॒णोतु॑ नो॒ हवं॑ रु॒द्रो म॒रुत्वा॑न् ।

तन्नो॑ मि॒त्रो वरु॑णो मामहन्ताम॒दिति॒ः सिन्धु॑ः पृथि॒वी उ॒त द्यौः ॥८४॥

(१.११४.११)

अवस्यवः अवः अन्नं रक्षणं वा इच्छन्तः वयम् अवोचाम स्तोत्रमवादिष्म। अस्मै रुद्राय नमः अस्तु। मरुत्वान् स्वपुत्रयुक्तः रुद्रः नः अस्माकं हवम् आह्वानं शृणोतु। सर्वं च तन् मित्रादयः मामहन्तां पूजयन्तु ॥८४॥

एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।

ब्रह्म कृण्वन्तो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥८५॥

(१.११७.२५)

हे अश्विनौ वां युवयोः सम्बन्धीनि पूर्व्याणि प्रत्नानि एतानि इदानीं मयोक्तानि वीर्याणि आयवः मनुष्याः मदीयाः पित्रादयः प्र अवोचन् उक्तवन्तः। हे वृषणौ कामाभिवर्षकौ वयं युवभ्यां ब्रह्म मन्त्रात्मकं स्तोत्रं कृण्वन्तः कुर्वन्तः सुवीरासः पुत्रादिभिरुपेताः सन्तः विदथं वेदयन्तमतिथिं तदपेक्षितप्रदानेन आ वदेम आभिमुख्येन प्रियां वाचमुच्चारयाम ॥८५॥

**इति श्रीमन्नारायणभट्टसूरिसूनुरामकृष्णात्मजदिनकरभट्टकृते ऋगर्थव्याख्यासारे प्रथमाष्टकान्तर्गतऋग्व्याख्या समाप्ता ॥**

## ततो द्वितीया[ष्टका]न्तर्गता ऋचः

नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति ।

तस्मा आपो घृतमर्षन्ति सिन्धवस्तस्मा इयं दक्षिणा पिन्वते सदा ।८६॥

(१.१२५.५)

(सामान्यतो दानं त्रिभिः प्रशंसति ।) यः पृणाति यो दानेन देवब्राह्मणादीन् प्रीणाति सः नाकस्य पृष्ठे स्वर्गस्योन्नतदेशे अधि अधिकम् आकल्पान्तं तिष्ठति। ह प्रसिद्धौ। सः देवेषु गच्छति। स्वयं देवो भवतीत्यर्थः। तस्मै सिन्धवः स्यन्दनशीलाः आपः घृतं सारम् अर्षन्ति गच्छन्ति रसवत्यो भवन्तीत्यर्थः। इयं भूमिरपि दक्षिणा सस्यादिसम्पादनदक्षा तस्मै पिन्वते सेचयति तोषयतीत्यर्थः ॥८६॥

दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः ।

दक्षिणावन्तो अमृतं भजन्ते दक्षिणावन्तः प्र तिरन्त आयुः ॥८७॥

(१.१२५.६)

दक्षिणावताम् इत् गोहिरण्यादिदातॄणामेव इमानि दृश्यमानानि चित्रा चित्राणि स्रक्चन्दनादीनि भवन्तीत्यर्थः। किं च सूर्यासः सूर्यसम्बन्धिनो लोकाः भोगा वा भवन्ति

ते च अमृतं जरामरणरहितस्थानं भजन्ते। "विविदिषन्ति यज्ञेन दानेन" (बृ. उ. ४.४.२२) इति श्रुतेः। दक्षिणावन्तः इत् एव आयुः प्र तिरन्ते वर्धयन्ते लभन्ते। इदिति सर्वत्र सम्बध्यते ॥८७॥

मा पृणन्तो दुरितमेन आरन् मा जारिषुः सूरयः सुव्रतासः।

अन्यस्तेषां परिधिरस्तु कश्चिदपृणन्तमभि सं यन्तु शोकाः ॥८८॥

(१.१२५.७)

पृणन्तः देवब्राह्मणादीन् प्रीणयन्तः दुरितं दुः दुष्टम् इतं प्राप्तं दुःखं तत्साधनम् एनः पापं च मा आ अरन् मा प्राप्नुवन्। न केवलं दातारः किं तु सूरयः देवादीनां स्तोतारोऽपि मा जारिषुः जरया जीर्णा न भवेयुः। तथा सुव्रतासः शोभनकृच्छ्रचान्द्रायणादिकर्तारो मा जारिषुः। तेषां दातृणां स्तोतृणां च अन्यः तेभ्योऽन्यः पुरुषः परिधिः पापस्य धारकः अस्तु। यद्वा अन्यो धर्मः तेषां परिधिः कवचमस्तु। अपृणन्तम् अदातारं शोकाः अभि सं यन्तु प्राप्नुवन्तु ॥८८॥

**अमन्दानिति सप्तर्चवर्गस्यार्थः**

अमन्दानारभ्य आवर्गसमाप्तिराद्यपञ्चानां कक्षीवान् ऋषिः। षष्ठ्या भावयव्यः। सप्तम्या रोमशा नाम ब्रह्मवादिनी। आद्यपञ्चानां या तेनोच्यत इति न्यायात् स एव देवता।

अमन्दान्स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य।

यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥८९॥

(१.१२६.१)

सिन्धौ सिन्धुदेशे लक्षणया समुद्रतीरे वा अधि क्षियतः वसतो भाव्यस्य भावयव्यस्य स्वनयस्य दानादीनाम् अमन्दान् अनल्पान् स्तोमान् स्तोत्राणि मनीषा मनीषया प्र भरे सम्पादयामि। [अतूर्तः केनापि अहिंसितः यः राजा मे मदर्थं सहस्रं तत्संख्याकान् सवान् सोमयागान् अमिमीत संपूर्णधनप्रदानेन निर्मितवान्। किमिच्छन्,] श्रवः कीर्तिम् इच्छमानः। यागप्रसङ्गेन दक्षिणा प्राप्ता इति मदर्थमित्युक्तिः ॥८९॥

शतं राज्ञो नाधमानस्य निष्कांछतमश्वान् प्रयतान्सद्य आदम्।

शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥९०॥

(१.१२६.२)

स्वकीर्तये धनं ग्राह्यमित्युच्चैः नाधमानस्य याचमानस्य असुरस्य असुरवदपरिमितदातुः राज्ञः स्वनयस्य निष्कान् आभरणविशेषान् पदकान् परिमाणविशेषविशिष्टानि वा सुवर्णानि शतम् अपरिमितान् सद्यः प्रार्थनानन्तरमेव कक्षीवान् आदम् आदत्तवान्। तथा प्रयतान् शुद्धान् सपल्याणान् [वा] अश्वान् आदम् आदत्तवान्। [तथा] गोनां बलीवर्दानां शतम् आदम्। उत्तरमन्त्रे स्त्रीगवीनां ग्रहणात्। एवं राजा दिवि स्वर्गे अजरं श्रवः शाश्वतकीर्तिम् आ ततान विस्तारितवान्। प्रतिग्रहीता अहं स्वर्गे कीर्तिमकरवमित्यर्थः ॥९०॥

उप॑ मा श्या॒वाः स्व॒नये॑न द॒त्ता व॒धूम॑न्तो॒ दश॒ रथा॑सो अस्थुः।

ष॒ष्टिः स॒हस्र॒मनु॒ गव्य॒माग॑त् सन॑त् क॒क्षीवाँ॑ अभिपि॒त्वे अह्ना॑म् ॥९१॥

(१.१२६.३)

स्वनयेन दत्ताः श्यावाः श्यामवर्णाश्वैर्युक्ताः वधूमन्तः आरूढवधूभिर्युक्ताः दशसंख्याकाः रथाः मा मां प्रति उप अस्थुः उपस्थिताः। गव्यं गोसमूहरूपं षष्टिः सहस्रं षष्ट्यधिकसहस्रम् अनु रथानां मम वा पश्चात् आ अगात्। एतत्सर्वं प्रतिगृह्य अयं कक्षीवान् अह्नाम् अभिपित्वे सन्निहिते अहनि स्वीकृतं रथवध्वादिकं स्वपित्रे सनत् समर्पयति। (षण दाने। लेटि, लेटोऽडाटौ (पा. ३.४.९४) इत्यटि जाते इतश्च लोपः (पा. ३.४.९७) इतीकारलोपे सनदिति सिद्धम्। "प्रपित्वे अभीके इत्यासन्नस्य" (नि० ३.२०) इति यास्कोक्तेः अभिपित्वे शब्दस्यापि सन्निहितवाचित्वम्। उपसर्गमात्रभेदात्) ॥९१॥

च॒त्वा॒रिं॒शद् दश॑रथस्य॒ शोणाः॑ स॒हस्र॒स्याग्रे॒ श्रेणिं॑ नयन्ति।

म॒द॒च्युतः॑ कृश॒नाव॑तो॒ अत्या॑न् क॒क्षीव॑न्त॒ उद॑मृक्षन्त प॒ज्राः ॥९२॥

(१.१२६.४)

शोणाः लोहिताः चत्वारिंशत् अश्वाः दशरथस्य दशानां रथानां समूहो दशरथं तस्य श्रेणिं पङ्क्तिं सहस्रस्य पूर्वोक्तगोषष्टिसहस्रस्य अग्रे नयन्ति पुरस्तान्नयन्ति। दशानां रथानां मिलित्वा चत्वारिंशदश्वाः। अथ तान् कक्षीवन्तः कक्ष्या अश्वसम्बन्धिनी रज्जुः ("कक्ष्या रज्जुरश्वस्य" (नि. २.२) इति यास्कोक्तिः) तद्वन्तः, यद्वा अङ्गिरसः पुत्राः सर्वेऽपि कक्षीवन्तः, अथवा कक्षीवदनुचराः सर्वेऽपि छत्रिन्यायेन कक्षीवन्तः, पज्राः अन्नवन्तः सन्तः मदच्युतः मदस्राविणः उद्धृत्तान् शत्रूणां मदस्य च्यावयितॄन् वा कृशनावतः सुवर्णनानाभरणयुक्तान् (कृशनमिति हिरण्यनाम "कृशनं लोहं कनकम्" (नि. १.२.७) इति तन्नामसु पाठात्) अत्यान् सततगमनशीलान् अश्वान् उत् अमृक्षन्त अध्वश्रमजनितस्वेदापनयनाय उत्कृष्टं मार्जयन्ति ॥९२॥

पूर्वामनु प्रयतिमा ददे वस्त्रीन् युक्ताँ अष्टावरिधायसो गाः ।

सुबन्धवो ये विश्याइव व्रा अनस्वन्तः श्रव ऐषन्त पज्राः ॥९३॥

(१.१२६.५)

आनीतं धनं बन्धुभ्यो निवेदयन्नाह । हे सुबन्धवः पूर्वां प्रयतिं पूर्वप्राप्तां दक्षिणां वः युष्मदर्थम् आ ददे स्वीकृतवानस्मि । तथा युक्तान् अश्वैर्योजितान् धनैर्वा युक्तान् त्रीन् अष्टौ च रथान् तथा अरिधायसः अरिभिरीश्वरैर्धारणीयाः असंख्याता गाः च आ ददे । विश्याइव विशः प्रजाः तत्र भवा विश्याः व्राः व्रियन्त इति व्राः व्राता इत्यर्थः ( तकारलोपश्छान्दसः) पज्राः अन्नवन्तो ये सन्ति ते अनस्वन्तः हविर्धानशकटोपलक्षितसोमयागवन्तः सन्तः श्रवः कीर्तिम् ऐषन्त इच्छन्ति । मदानीतधनेन यागान् कुर्वन्त्वित्यर्थः ॥९३॥

[अत उत्तरम् ऋग्द्वयम् (९४-९५) उत्सृष्टम् । ]

परं ऋणा सावीरध मत्कृतानि माहं राजन्नन्यकृतेन भोजम् ।

अव्युष्टा इन्नु भूयसीरुषास आ नो जीवान् वरुण तासु शाधि ॥९६॥

(२.२८.९)

हे वरुण ऋणा ऋणानि पित्रादिभिः कृतानि परा सावीः परासुव ( षू प्रेरणे छान्दसो लुङ् )। अध अधुना मत्कृतानि ऋणानि परासुव। अपि च हे राजन् अहम् अन्यकृतेन अन्योपार्जितेन धनेन मा भोजं मा भोगं लभेयम् । कारणमाह । नु सत्यं भूयसीः बह्वीः उषासः प्रातःकालाः ऋणचिन्तया अव्युष्टाः इत् व्युष्टा [अपि व्युष्ट- ] भिन्ना एव आसन् । हे वरुण तासु उषस्सु नः अस्मान् जीवान् जीवनवतः आ शाधि कुरु । ऋणान्यपाकृत्य भोगपर्याप्तं धनं प्रयच्छेत्यर्थः ॥९६॥

यो मे राजन् युज्यो वा सखा वा स्वप्ने भयं भीरवे मह्यमाह ।

स्तेनो वा यो दिप्सति नो वृको वा त्वं तस्माद् वरुण पाह्यस्मान्

॥९७॥ (२.२८.१०)

हे राजन् वरुण मे युज्यः योजनसमर्थः पित्रादिः वा सखा वा अन्यो बान्धवो वा स्वप्ने दृष्टं भयं मह्यं भीरवे [यः] आह । [तथा] स्तेनः वा वृकः वा [यः नः] दिप्सति जिघांसति । तस्मात् अनिष्टात् त्वम् [अस्मान्] पाहि रक्ष ॥९७॥

माहं मघोनो वरुण प्रियस्य भूरिदाव्न आ विदं शूनमापेः ।

मा रायो राजन्त्सुयमादव स्थां बृहद् वदेम विदथे सुवीराः ॥९८॥

(२.२८.११)

हे वरुण मघोनः धनवतः प्रियस्य अनुकूलस्य भूरिदाव्नः भूरेः बहुधनस्य दाव्नः दातुः अहम् [मा] आ विदं [न] आवेदयानि। किमिति न आवेद्यम्? आपेः शूनं शून्यं दारिद्र्यम्। मदीयाः पुत्रादयः क्षुधिता इति मा याचामीत्यर्थः। हे राजन् सुयमात् सुष्ठु यम्यते गृहमिति सुयमं धनं तस्मात् रायः धनात् मा अव स्थां वियुज्य स्थितो मा भूवम्। सुवीराः शोभनपुत्राः [वयं विदथे] यज्ञे वर्त्तमानाः सन्तः बृहत् प्रौढं स्तोत्रं वदेम उच्चारयाम ॥९८॥

**इति दिनकरकृतौ ऋगर्थसारे द्वितीयाष्टकान्तर्गतानाम् ऋचां व्याख्या ॥**

शतधारमुत्समक्षीयमाणं विपश्चितं पितरं वक्त्वानाम् ।

मेळिं मदन्तं पित्रोरुपस्थे तं रोदसी पिपृतं सत्यवाचम् ॥९९॥

(३.२६.९)

हे रोदसी शतधारम् अपरिमितधारायुक्तम् अक्षीयमाणं न कदापि विच्छिन्नप्रवाहम् उत्सम् उत्समिव शतप्रवाहोपेतं स्रोत इव अविच्छिन्नवाक्सरणीसमेतं विपश्चितं मेधाविनं सकलशास्त्राभिज्ञं पितरं शिष्याणां विद्योपदेशेन पालकं वक्त्वानां वक्तव्यानां नानाशाखागतानां वेदवाक्यानां तदर्थानां वा मेळिं मेलकं पित्रोः द्यावापृथिव्योः उपस्थे समीपे मदन्तं ज्ञानातिशयेन हृष्यन्तम्। पृथिव्यां स्वर्गे वा नैतादृशोऽस्तीत्यर्थः। सत्यवाचं अज्ञातार्थाभावात्परप्रतारणे च कारणाभावात् [ सत्यवादिनं ] तम् उपाध्यायं पिपृतं फलदानेन सम्पूर्णं कुरुतम् (पॄ पालनपूरणयोः) ॥९९॥

तत् सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।

धियो यो नः प्रचोदयात् ॥१००॥ (३.६२.१०)

यः सविता देवः नः अस्माकं धियः कर्माणि धर्मादिविषया बुद्धीः [वा] प्रचोदयात् प्रेरयेत् तस्य देवस्य सवितुः सर्वान्तिर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य वरेण्यं सर्वैरुपास्यतया ज्ञाततया च संभजनीयं भर्गः अविद्यातत्कार्ययोर्भर्जनाद्भर्गः स्वयंज्योतिः तत् तेजः परब्रह्मात्मकं धीमहि वयं ध्यायामः। यद्वा तदिति भर्गोविशेषणम्। सवितुः

देवस्य तत् तादृशं भर्गः धीमहि । किं तदित्यपेक्षायाम् आह । यः इति लिङ्गव्यत्ययः । यद् भर्गः धियः प्रचोदयात् तत् ध्यायेमेति । यद्वा [यः] सविता सूर्यो धियः कर्माणि प्रचोदयात् प्रेरयति तस्य सवितुः सर्वस्य प्रसवितुः देवस्य द्योतमानस्य सूर्यस्य तत् सर्वैर्दृश्यमानतया प्रसिद्धं वरेण्यं सर्वैः संभजनीयं भर्गः पापानां तापकं तेजोमण्डलं धीमहि धारयामः तस्याधारभूता भवेमेत्यर्थः । भर्गःशब्दस्यान्नपरत्वं चाथर्वणे "वेदांश्छन्दांसि सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः । कर्माणि धियस्तदु ते प्रब्रवीमि प्रचोदयन्तसविता याभिरेति" (गो. ब्रा. १.३२) । (भर्गः भ्रस्ज पाके असुन् । भ्रस्जो रोपधयोः (पा० ६.४.४७) इति रोपधयोर्लोपो रमागमः न्यङ्क्वादिपाठात् कुत्वम् । धीमहि ध्यायतेर्लिङि, बहुलं छन्दसि (पा० ६.१.३४) इति सम्प्रसारणम् । व्यत्ययेनात्मनेपदम् । यद्वा धीङ् आधारे लिङि, बहुलं छन्दसि (पा० २.४.७३) इति विकरणस्य लुक् । प्रचोदयात् चोदयतेर्लेट्यडागमः । यद्वृत्तयोगादनिघातः । वरेण्यमित्यत्र वरेणियमिति पाठाच्चतुर्विंशत्यक्षरमिति केचिन्, इयदिपूरण इति पिङ्गलोक्तः) ॥१००॥

अ॒स्माँ इ॒हा वृ॑णीष्व स॒ख्याय॑ स्व॒स्तये॑ ।

म॒हो रा॒ये दि॒वित्म॑ते ॥१०१॥ (४.३१.११)

हे इन्द्र त्वम् इह अस्मिन् यज्ञे अस्मान् सख्याय सखिभावाय स्वस्तये अविनाशाय च महः महते दिवित्मते दीप्तिमते राये धनाय च वृणीष्व भजस्व ॥१०१॥

स इद्राजा॒ प्रति॑जन्यानि॒ विश्वा॒ शुष्मे॑ण तस्थाव॒भि वी॒र्ये॑ण ।

बृह॒स्पतिं॒ यः सुभृ॑तं बि॒भर्ति॑ वल्गू॒यति॒ वन्द॑ते पूर्व॒भाज॑म् ॥१०२॥

(४.५०.७)

स इत् स एव राजा विश्वा सर्वाणि प्रतिजन्यानि प्रतिपक्षबलानि शुष्मेण वीर्येण अभि तस्थौ अभितिष्ठति अभिभवतीत्यर्थः । (लकारव्यत्ययः । ) यः राजा बृहस्पतिं तत्तुल्यं पुरोहितं पूर्वभाजं प्रथमतो राजहितकारिणं सुभृतं दानमानसत्कारैः सम्यगवस्थितिर्यथा स्यात्तथा बिभर्ति पोषयति वल्गूयति अर्चयति वन्दते नमस्करोति च ॥१०२॥

स इत् क्षे॑ति॒ सुधि॑त॒ ओक॑सि॒ स्वे तस्मा॒ इळा॑ पिन्वते विश्व॒दानी॑म् ।

तस्मै॒ विशः॑ स्वयमे॒वा न॑मन्ते॒ यस्मि॑न् ब्र॒ह्मा राज॑नि॒ पूर्व॒ एति॑ ॥१०३॥

(४.५०.८)

स एव स्वे ओकसि स्वे गृहे सुधितः सुप्रीतः सन् क्षेति निवसति ऐश्वर्यं वा प्राप्नोति । इळा पृथ्वी तस्मै विश्वदानीं सर्वदा पिन्वते वर्धते । विशः प्रजाः तस्मै स्वयमेव आ नमन्ते दत्तकरा भवन्ति । यस्मिन् राजनि ब्रह्मा ब्राह्मणः पूर्वः संमानितः सन् एति आगच्छति ॥१०३॥

अप्रतीतो जयति सं धनानि प्रतिजन्यान्युत या सजन्या ।

अवस्यवे यो वरिवः कृणोति ब्रह्मणे राजा तमवन्ति देवाः ॥१०४॥
(४.५०.९)

सः एव राजा अप्रतीतः प्रतिकूलैः शत्रुभिरप्राप्तः सन् धनानि सं जयति । कीदृशानि धनानि, प्रतिजन्यानि प्रतिजनेषु वैरिषु भवानि तथा सजन्या सजनेषु मित्रेषु भवानि । उत समुच्चयार्थे। यद्वा धनानि धनोपेतानि परराष्ट्राणि सं जयति। तत्र प्रतिजन्यानि शत्रून् तथा या सजन्या शत्रुसहिता सेना तामपि जयति । यः राजा अवस्यवे दरिद्राय ब्रह्मणे ब्राह्मणाय वरिवः द्रव्यं कृणोति ददाति तं राजानं देवाः अवन्ति रक्षन्ति ॥१०४॥

अयं चार्थोऽष्टमपञ्चिकायां पञ्चमाध्यायतृतीयखण्डेन "तदप्येतदृषिणोक्तमित्यादिना" (ऐ.ब्रा.८.२६) दर्शितः ॥

**इति दिनकरकृतौ ऋगर्थसारे तृतीयाष्टकान्तर्गतऋग्व्याख्या ॥**

अग्निस्तुविश्रवस्तमं तुविब्रह्माणमुत्तमम् ।

अतूर्तं श्रावयत्पतिं पुत्रं ददाति दाशुषे ॥१०५॥ (५.२५.५)

अग्निः तुविश्रवस्तमम् । तुविशब्दो भूरिवाची तुवि श्रवः शास्त्रश्रवणं कीर्तिः वा अन्नं वा यस्य स तुविश्रवाः । अतिशयेन सः । तादृशम् । तुविब्रह्माणं बहुस्तोत्रम् । उत्तमम् उत्कृष्टम् अतूर्तं शत्रुभिरपराजितं श्रावयत्पतिम् । श्रावयन्ति स्वकर्मणा विश्रुतान् पितॄन् कुर्वन्ति ते श्रावयन्तः । तेषां पतिं श्रेष्ठं पुत्रं दाशुषे दानशीलाय [यजमानाय] ददाति ददातु ॥१०५॥

अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।

सं जास्पत्यं सुयममा कृणुष्व शत्रूयतामभि तिष्ठा महांसि ॥१०६॥
(५.२८.३)

हे अग्ने त्वं महते प्रभूताय सौभगाय अस्माकं शोभनधनत्वाय शर्ध शत्रून् सहस्व। तव संबन्धीनि द्युम्नानि धनानि तेजांसि वा उत्तमानि सन्तु। जास्पत्यम्। जाया च पतिश्च जायापती तयोः कर्म जास्पत्यम् तत् सुयमं सुष्ठु नियमोपेतम् अन्योन्यसंश्लिष्टमित्यर्थः सम् आ कृणुष्व सम्यक् कुरुष्व। किं च शत्रूयतां शत्रून् आत्मनः इच्छतां शत्रूयतां सपत्नानां महांसि तेजांसि अभि तिष्ठ आक्रमस्व ॥१०६॥

विस्तृतिभीत्यान्यऋग्व्याख्या न लिखिता ॥

**इति दिनकरकृतौ ऋगर्थसारे चतुर्थाष्टकान्तर्गतऋग्व्याख्या ॥**

जीमूतस्येव भवति प्रतीकं यद् वर्मी याति समदामुपस्थे।

अनाविद्धया तन्वा जय त्वं स त्वा वर्मणो महिमा पिपर्तु ॥१०७॥

(६.७५.१)

समदां संग्रामाणाम् उपस्थे उपस्थाने सति यत् यदा अयं राजा वर्मी कवची याति तदा लोहमयेन वर्मणा सन्नद्धस्य राज्ञः प्रतीकं रूपं जीमूतस्येव मेघस्येव भवति। मेघस्य यादृशं कृष्णं रूपं तादृशमस्य भवतीत्यर्थः। हे राजन् अनाविद्धया शत्रुभिरबाधितया तन्वा शरीरेण शत्रून् त्वं जय। स तादृशो वर्मणः महिमा त्वा त्वां पिपर्तु पालयतु (स त्वेति, "ऊष्मा परिलुप्यते त्रयाणां [स्वरवर्जम्]" (ऋ.प्रा. २.११) इत्यूष्मलोपः) ॥१०७॥

पञ्चमाष्टकान्तर्गतऋचां विस्तरभीत्या व्याख्या न लिखिता ॥

**इति दिनकरकृतौ ऋगर्थसारे पञ्चमाष्टकान्तर्गतऋग्व्याख्या ॥**

न युष्मे वाजबन्धवो निनित्सुश्चन मर्त्यः।

अवद्यमधि दीधरत् ॥१०८॥ (८.६८.१९)

हे वाजबन्धवः अन्नदातारः युष्मे युष्मासु निनित्सुः निन्दां कर्तुमिच्छुः। च-न-शब्दौ अप्यर्थे। अवद्यं पापं न अधि दीधरत् न धारयति। निन्दाप्रसङ्गेनाप्यन्नदातुः नामग्रहणात् पुण्यमेव भवतीति भावः ॥१०८॥

**इति दिनकरकृतौ ऋगर्थसारे षष्ठाष्टकान्तर्गतऋग्व्याख्या ॥**

महद्द्य महतामा वृणीमहेऽवो देवानां बृहतामनर्वणाम् ।

यथा वसु वीरजातं नशामहै तद् देवानामवो अद्या वृणीमहे ॥१०९॥

(१०.३६.११)

अद्य अस्मिन्नहनि महतां श्रेष्ठानां बृहतां वृद्धानाम् अनर्वणाम् अप्रतिगतानाम् इन्द्रादीनां सम्बन्धि महत् अधिकम् अवः रक्षणं [आ वृणीमहे] प्रार्थयामहे। किं च वयं यथा वसु धनं वीरजातम् अपत्यजातं च नशामहे प्राप्नुयाम। तथा देवाः कुर्वन्त्विति शेषः ॥१०९॥

महो अग्नेः समिधानस्य शर्मण्यनागा मित्रे वरुणे स्वस्तये ।

श्रेष्ठे स्याम सवितुः सवीमनि तद् देवानामवो अद्या वृणीमहे॥११०॥

(१०.३६.१२)

समिधानस्य समिध्यमानस्य महः महतः अग्नेः शर्मणि सुखे वयं स्याम भवेम। किं च वयं अनागाः अनागसः (वचनव्यत्ययः) स्याम। किं च मित्रे वरुणे मित्रावरुणयोः (षष्ठ्यर्थे सप्तमी) स्वस्तये [स्याम]। श्रेष्ठे सवितुः च सवीमनि प्रसवे स्वस्तये सर्वप्रकाराविनाशाय स्याम ॥११०॥

ये सवितुः सत्यसवस्य विश्वे मित्रस्य व्रते वरुणस्य देवाः ।

ते सौभगं वीरवद् गोमदप्नो दधातन द्रविणं चित्रमस्मे ॥१११॥

(१०.३६.१३)

ये विश्वे देवाः सत्यसवस्य सत्यप्रसवस्य सवितुः मित्रस्य [वरुणस्य] मित्रावरुणयोश्च व्रते प्रसवाख्ये कर्मणि भवन्ति ते यूयं सौभगं सौभाग्यं च, वीरवत् पुत्राद्युपेतं गोमत् गोयुक्तम् अप्नः कर्म च, अस्मे अस्मासु चित्रं द्रविणं च, दधातन प्रयच्छत ॥१११॥

सविता पश्चातात् सविता पुरस्तात् सवितोत्तरात्तात् सविताधरात्तात् ।

सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥११२॥

(१०.३६.१४)

सविता पश्चात्तात् पश्चिमतः स्थितः। पुरस्तात् पूर्वतः स्थितः। उत्तरात्तात् उत्तरतः स्थितः। अधरात्तात् अधरतः स्थितः। सविता नः अस्माकं सर्वतातिं सर्वमभिलषितं सुवतु प्रेरयतु। किं च सविता नः अस्मभ्यं दीर्घम् आयुः रासतां ददातु। पुनः पुनः सवितृपदावृत्तिरादरार्था ॥११२॥

**इति दिनकरकृतौ ऋगर्थसारे सप्तमाष्टकान्तर्गतानाम् ऋचां व्याख्या ॥**

जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम्।

विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः॥११३॥

(१०.४७.१)

"जगृभ्माष्टौ सप्तगुर्वैकुण्ठम् [इन्द्रं] तुष्टाव" (सर्वानुक्रमणी)। वसूनां वसुपते बहुधनस्वामिन् (उदपेषं पिनष्टीतिवत्पुनर्वसुपदग्रहणम्) हे इन्द्र ते दक्षिणं हस्तं वसूयवः वसुकामाः वयं जगृभ्म गृह्णीमः। हे शूर वयं त्वां गोनां गोपतिं बहुगोस्वामिनं विद्म जानीमः। अतः अस्मभ्यं चित्रं चायनीयं वृषणं वर्षकं रयिं धनं दाः देहि ॥११३॥

"महत्तन्नवात्र युजोऽग्निवाक्यम्। विश्व इत्युत्तरं च षट्कनयुजो देवानाम्" (सर्वानुक्रमणी १०.५१-५२)। महत्तद्व्याख्या त्रुटिता। अयं शोधः सप्तमाष्टकस्थः (?)

महत् तदुल्वं स्थविरं तदासीद् येनाविष्टितः प्रविवेशिथापः।

विश्वा अपश्यद् बहुधा ते अग्ने जातवेदस्तन्वो देव एकः ॥११४॥

(१०.५१.१)

देवानां हविर्वहनेन दैत्यैर्हतेष्वग्रजेषु अग्निः अपः प्राविशत्। स च मत्स्यैर्वरुणाय प्रदर्शितः। ततो देवाः अग्निम् अब्रुवन्। [तथा च] "अग्नेस्त्रयो ज्यायांसो भ्रातरः आसन्" (तै. सं. २.६.६.१) इत्यादि तैत्तिरीयब्राह्मणे।

उल्वशब्देन गर्भप्रावरणमुच्यते। तेन अज्ञानं लक्ष्यते। हे अग्ने तत् उत्तरचरणे वक्ष्यमाणमुल्बं महत् स्थूलं स्थविरं स्थिरं च आसीत् येन उल्बेन [आविष्टितः] वेष्टितः त्वम् [आपः प्रविवेशिथ] जलानि प्रविष्टवान् असि। वैरिगृहे प्रविष्ट इति भावः। हे जातवेदः जातप्रज्ञ अग्ने एकः देवः ते सर्वाः तन्वः बहुधा बहुप्रकारम् अपश्यत् दृष्टवान्। किमर्थं गुप्तोऽसीति भावः ॥११४॥

को मा ददर्श कतमः स देवो यो मे तन्वो बहुधा पर्यपश्यत् ।

क्वाह मित्रावरुणा क्षियन्त्यग्नेर्विश्वाः समिधो देवयानीः ॥११५॥

(१०.५१.२)

हे मित्रावरुणौ मां कः देवः अपश्यत् । सः देवः कतमः यः मे तन्वः बहुधा बहुप्रकारं दृष्टवान् । दृष्टश्चेद्वदतु । मम अग्नेः विश्वाः सर्वाः समिधः दीप्ताः देवयानीः देवयानसाधनभूताः क्व क्षियन्ति ऐश्वर्येण वर्त्तन्ते । देवानां पुरस्तात् मित्रावरुणौ स्थिताविति तत्सम्बोधनम् ॥११५॥

ऐच्छाम त्वा बहुधा जातवेदः प्रविष्टमग्ने अप्स्वोषधीषु ।

तं त्वा यमो अचिकेच्चित्रभानो दशान्तरुष्यादतिरोचमानम् ॥११६॥

(१०.५१.३)

हे जातवेदः वयम् अप्सु ओषधीषु च प्रविष्टं त्वाम् अनु ऐच्छाम अन्वेषितवन्तः । तादृशं त्वा यमः देवः अचिकेत् ज्ञातवान् हे चित्रभानो। क्व माम् ददर्शेत्यस्योत्तरमुक्तम्। क्व क्षियन्तीत्यस्योत्तरं विशेषेणाह । दश दशसंख्याकात् अन्तः गोप्यात् उष्यात् स्थानात् अतिरोचमानम् अतिप्रकाशमानम् । पृथिव्यन्तरिक्षस्वर्गास्त्रयो लोकाः अग्निवाय्वादित्यास्त्रयो देवाः आप ओषधयो वनस्पतयः प्राणशरीरमिति दश [अग्नेः गूढानि] स्थानानीति ॥११६॥

होत्रादहं वरुण बिभ्यदायं नेदेव मा युनजन्नत्र देवाः ।

तस्य मे तन्वो बहुधा निविष्टा एतमर्थं न चिकेताहमग्निः ॥११७॥

(१०.५१.४)

गुप्तत्वे कारणमाह । वरुणेत्युपलक्षणम् । हे देवाः अहं होत्रात् हविर्वहनाख्यात् कर्मणः बिभ्यत् भयं प्राप्नुवान् आयम् आगतवानस्मि । अतः मा [ माम् ] अत्र हविर्वहने न [ इत् ] युनजन् नैव योजयत । तस्य बिभ्यतः मे तन्वः बहुधा ओषध्यादिषु निविष्टाः । एतं हविर्वहनाख्यमर्थम् [अहम् अग्निः] न चिकेत नाङ्गीकरोमि ॥११७॥

एहि मनुर्देवयुर्यज्ञकामोऽरंकृत्या तमसि क्षेष्यग्ने ।

सुगान् पथः कृणुहि देवयानान् वह हव्यानि सुमनस्यमानः ॥११८॥

(१.५१.५)

हे अग्ने एहि आगच्छ। मनुः मनुष्यः देवयुः देवान् यष्टुमिच्छन् यज्ञकामश्च भवति [अत एहि]। त्वम् अरंकृत्य तेजःपुञ्जमात्मानं च अलंकुर्वन् तमसि अन्धकारे [क्षेषि] निवससि। अज्ञानेनावारणात् त्वं जीवैर्ज्ञातुमशक्य इति भावः। हे अग्ने त्वं देवयानान् देवहविर्वहनसाधनान् पथः मार्गान् सुगान् सुखेन गन्तुं शक्यान् कृणुहि कुरु। अस्मदीयानि हव्यानि सुमनस्यमानः सन्तुष्टः सन् वह ॥११८॥

अग्नेः पूर्वे भ्रातरो अर्थमेतं रथीवाध्वानमन्वा वरीवुः।
तस्माद् भिया वरुण दूरमायं गौरो न क्षेप्नोरविजे ज्यायाः ॥११९॥
(१०.५१.६)

हे देवाः मम [पूर्वे भ्रातरः] भूपतिर्भुवनपतिर्भूतानांपतिरिति त्रयो ज्येष्ठभ्रातरः एतं हविर्वहनाख्यम् अर्थम् अन्वा वरीवुः अनुक्रमेण आवृतवन्तः। रथीव अध्वानम्। रथी अध्वानं यथा वृणोति तद्वत् ते भ्रातरस्तथा कुर्वन्तः हताः। हे वरुण अहं तस्मात् मरणात् भिया दूरं दूरदेशम् आयम् आगतः। यथा गौरः मृगः क्षेप्नोः इषुक्षेप्तुः धनुषः ज्यायाः सकाशात् भिया अविजे [अकम्पे] चलति। न इवार्थे। यद्वा ज्यातो अविजे बिभेति (ओविजी भयचलनयोः) ॥११९॥

कुर्मस्त आयुरजरं यदग्ने यथा युक्तो जातवेदो न रिष्याः।
अथा वहासि सुमनस्यमानो भागं देवेभ्यो हविषः सुजात ॥१२०॥
(१०.५१.७)

हे अग्ने अजरं जरारहितं यत् आयुः तत् ते कुर्मः। यथा तेनायुषा युक्तस्त्वं न रिष्याः न म्रियसे तथा कुर्मः। हे सुजात अथ त्वं सुमनस्यमानः सौमनस्यं कुर्वन् हविषः [भागं] यजमानदत्तं हविर्भागं देवेभ्यः वहासि वह ॥१२०॥

प्रयाजान् मे अनुयाजाँश्च केवलानूर्जस्वन्तं हविषो दत्त भागम्।
घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥१२१॥
(१०.५१.८)

हे देवाः मे मह्यं प्रयाजान् अनुयाजांश्च। तत्सम्बन्धि हविरित्यर्थः। केवलान् असाधारणान् दत्त प्रयच्छत। तथा ऊर्जस्वन्तं सारवन्तं हविषः पुरोडाशादेः भागं स्विष्ट-

कृदाख्यं दत्त। अथ अपां सारभूतं घृतम् ओषधीनां [पुरुषं] पुरोडाशं च दत्त प्रयच्छत। यद्वा अपामोषधीनां च पुरुषम् अबोषधिजन्यं पुरोडाशं [दत्त]। किं च अग्नेः मम दीर्घम् आयुः अस्तु ॥१२१॥

तव॑ प्रया॒जा अ॑नुया॒जाश्च॒ केव॑ल॒ ऊर्ज॑स्वन्तो ह॒विषः॑ सन्तु भा॒गाः ।
तवा॑ग्ने य॒ज्ञो३॒॑ऽयम॑स्तु॒ सर्व॒स्तुभ्यं॑ नमन्तां प्र॒दिश॒श्चत॑स्रः ॥१२२॥
(१०.५१.९)

हे अग्ने प्रयाजाः अनुयाजाश्च केवले असाधारणाः तव सन्तु। ऊर्जस्वन्तः हविषः भागाश्च तव सन्तु। अयं सर्वो यज्ञश्च तवास्तु। प्र प्रकृष्टाः मुख्याश्चतस्रो दिशः तुभ्यं नमन्ताम् ॥१२२॥

त्वं विश्वा॑ दधिषे॒ केव॑लानि॒ यान्या॒विर्या च॒ गुहा॒ वसू॑नि ।
काम॒मिन्मे॑ मघव॒न्मा वि ता॑रीस्त्वमा॑ज्ञाता त्वमि॑न्द्रासि दा॒ता॥१२३॥
(१०.५४.५)

हे इन्द्र त्वं विश्वा सर्वाणि केवलानि अन्येषामसाधरणानि वसूनि दधिषे धारयसि। कीदृशानि, यानि आविः आविर्भूतानि बहिः स्थितानीत्यर्थः, यानि च गुहा गोप्यानि गूढप्रदेशे स्थापितानि। हे मघवन् धनवन् यतोऽन्यधनेन त्वं धनवान् तस्मात् त्वं मे कामं मा वि तारीः [इत्] मा हिंसीः। तव व्ययो नास्तीति भावः। हे इन्द्र त्वम् आज्ञाता सन् दाता असि प्रापयसि, तथा स्वयं च दाता असि ॥१२३॥

अ॒यं मे॒ हस्तो॒ भग॑वान्० ॥१२४॥ (१०.६०.१२)

अस्या ऋचोऽर्थस्य त्रुटिरस्ति ॥१२४॥

ये य॒ज्ञेन॒ दक्षि॑णया॒ सम॑क्ता इन्द्र॑स्य स॒ख्यम॑मृत॒त्वमा॑न॒श ।
तेभ्यो॑ भ॒द्रम॑ङ्गिरसो वो अस्तु॒ प्रति॑ गृभ्णीत मान॒वं सु॑मेधसः॥१२५॥
(१०.६२.१)

नाभानेदिष्ठः पित्रा मनुनाभ्यनुज्ञातः सत्रमासीनानङ्गिरसोऽभ्येत्याह। हे [सुमेधसः] अङ्गिरसः मां प्रति गृभ्णीत [भवन्तः] स्वीकुर्वन्तु। यज्ञेन यजनीयेन हविषा दक्षिणया च

ऋत्विग्भ्यो देयया समक्ताः संगताः ये अहीनैकाहसत्राणि कुर्वन्तः यूयम् इन्द्रस्य सख्यं सखिकर्म [ तथा ] अमृतत्वम् अमरणधर्मत्वं देवत्वम् आनश प्राप्ताः स्थ, तेभ्यः वः युष्मभ्यं भद्रम् अस्तु । ते यूयं मानवं मनोः पुत्रं मां प्रति गृभ्णीत प्रतिगृह्णीत ॥१२५॥

य उदाजन् पितरो गोमयं वस्वृतेनाभिन्दन् परिवत्सरे वलम् ।

दीर्घायुत्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥१२६॥

(१०.६२.२)

हे अङ्गिरसः पितरः अस्माकं पूर्वजत्वेन पितृभूताः [ ये ] यूयं गोमयं गवात्मकं पणिभिरपहृतं वसु उदाजन् उदगमयन् आनीतवन्त इत्यर्थः । [ये च] यूयं परिवत्सरे वत्सर-साध्यसत्रान्ते ऋतेन सत्यभूतेन यज्ञेन वलनामानं चोरमसुरम् अभिन्दन् अनाशयन् । तेभ्यो वः दीर्घायुत्वम् अस्तु ॥१२६॥

य ऋतेन सूर्यमारोहयन् दिव्यप्रथयन् पृथिवीं मातरं वि ।

सुप्रजास्त्वमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥१२७॥

(१०.६२.३)

हे अङ्गिरसः ये भवन्तः ऋतेन यज्ञेन सूर्यं दिवि आरोहयन्, [मातरं] सर्वनिर्मात्रीं पृथिवीं च वि अप्रथयन् प्रसिद्धामकुर्वन् [सत्रादिकर्मकरणेन], [तेभ्यः वः युष्मभ्यं] सुप्रजा-स्त्वं सुपुत्रत्वम् [अस्तु] ॥१२७॥

अयं नाभा वदति वल्गु वो गृहे देवपुत्रा ऋषयस्तच्छृणोतन ।

सुब्रह्मण्यमङ्गिरसो वो अस्तु प्रति गृभ्णीत मानवं सुमेधसः ॥१२८॥

(१०.६२.४)

हे देवपुत्राः ऋषयः अतीन्द्रियद्रष्टारः अङ्गिरसः अयं नाभा नाभानेदिष्टः (बहूनां व्यञ्जनस्य चेति बृहद्देवतायामुक्तत्वाद्वर्णानां लोपः ) वः गृहे [गृहभूते यज्ञे] वल्गु कल्याणं [वचः] वदति। तत् [ वाक्यम् ] आस्तिक्येन श्रृणोतन श्रृणुत । मदाशिषि विश्वासो विधेय इति भावः । [तेभ्यः वः युष्मभ्यं] सुब्रह्मण्यं शोभनं ब्रह्मवर्चसम् [अस्तु] ॥१२८॥

विरूपास इद्दषयस्त इद् गम्भीरवेपसः ।

ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥१२९॥ (१०.६२.५)

परोक्षतया ऋषिराह। प्रमाणतो रूपतश्च विरूपासः नानारूपा ऋषयः इत् अङ्गिरस एव गम्भीरवेपसः गम्भीरकर्माणो भवन्ति। ते इमे अङ्गिरसः सूनवः पुत्राः। ते च अग्नेः परि जज्ञिरे अग्नेः सकाशात् उत्पन्नाः ॥१२९॥

ये अग्नेः परि जज्ञिरे विरूपासो दिवस्परि ।

नवग्वो नु दशग्वो अङ्गिरस्तमः सचा देवेषु मंहते ॥१३०॥
(१०.६२.६)

[विरूपासः विविधरूपाः] ये अङ्गिरसः दिवः परि द्युलोकात् [अग्नेः परि जज्ञिरे] जातास्तेषां मध्ये नवग्वः अग्निः दशग्वश्च कश्चित् अङ्गिरस्तमः अङ्गिरसां वरिष्ठः देवेषु सचा सहावस्थितः मंहते [धनं प्रयच्छति] ॥१३०॥

इन्द्रेण युजा निः सृजन्त वाघतो व्रजं गोमन्तमश्विनम् ।

सहस्रं मे ददतो अष्टकर्ण्य१ः श्रवो देवेष्वक्रत ॥१३१॥
(१०.६२.७)

[वाघतः कर्मणां वोढारः अङ्गिरसः इन्द्रेण] युजा सहायेन निः सृजन्त निरगमयन्। [किम्,] गोमन्तं गोयुक्तम् अश्विनम् अश्वयुक्तं पणिभिरवरुद्धं व्रजम्। [ते च] सहस्रं तत्संख्याकं धनम् अष्टकर्ण्यः विस्तृतकर्णाः (अशू व्याप्तौ) गाः मे मह्यं ददतः [प्रयच्छन्तः देवेषु] श्रवः कीर्तिम् अक्रत अकृषत ॥१३१॥

प्र नूनं जायतामयं मनुस्तोक्मेव रोहतु ।

यः सहस्रं शताश्वं सद्यो दानाय मंहते ॥१३२॥ (१०.६२.८)

अयं सावर्णिः मनुः नूनं क्षिप्रं प्र जायतां प्रकृष्टो भवतु। धनादिभिः पुत्रादिभिश्च रोहतु प्रादुर्भवतु, तोक्मेव जलक्लिन्नबीजमिव। यः [मनुः] शताश्वं बह्वश्वयुक्तं गवां सहस्रं सद्यः अर्थिमिलनकाल एव दानाय मंहते प्रेरयति ॥१३२॥

न तमश्नोति कश्चन दिवइव सान्वारभम् ।

सावर्ण्यस्य दक्षिणा वि सिन्धुरिव पप्रथे ॥१३३॥ (१०.६२.९)

[तं सावर्णिं मनुं कश्चन कश्चिदपि आरभम् आरब्धुं स्वकर्मणा न अश्नोति न व्याप्नोति यथा मनुः प्रयच्छति तथान्यो दातुं न शक्नोतीत्यर्थः । कथंस्थितम्,] दिव इव द्युलोकस्य सानु शिखरसदृशम् आदित्यमिव वा अप्रधृष्यम् । अस्य [सावर्ण्यस्य] दक्षिणा सिन्धुरिव नदीव पप्रथे विस्तीर्णा बभूव ॥१३३॥

उत दासा परिविषे स्मद्दिष्टी गोपरीणसा ।

यदुस्तुर्वश्च मामहे ॥१३४॥ (१०.६२.१०)

उताऽपि च गोपरीणसा गोभिः परिवृतौ स्मद्दिष्टी कल्याणादेशिनौ दासा दासवत् [स्थितौ] यदुः तुर्वः च एतन्नामकौ राजर्षी मनोः परिविषे परिवेषणाय [भोजनाय] ममहे पूजयतः [पशून् प्रयच्छतः] ॥१३४॥

सहस्रदा ग्रामणीर्मा रिषन् मनुः सूर्येणास्य यतमानैतु दक्षिणा ।

सावर्णेर्देवाः प्र तिरन्त्वायुर्यस्मिन्नश्रान्ता असनाम वाजम् ॥१३५॥

(१०.६२.११)

सहस्रदाः गवादिसहस्रदाता ग्रामणीः [ग्रामाणां] नेता अयं मनुः मा रिषत् कैश्चिदपि हिंसितः मा भवतु । यद्वा सावर्णिरस्मान् मा हिनस्तु । किन्तु धनादिदानेन पूजयतु । अस्य दक्षिणा यतमाना गच्छन्ती सूर्येण सह एतु संगच्छताम् । त्रिष्वपि लोकेषु प्रसिद्धा भवत्वित्यर्थः । [तस्य सावर्णेः] सवर्णपुत्रस्य मनोः देवाः आयुः प्र तिरन्तु वर्धयन्तु । यस्मिन् मनौ वयम् अश्रान्ताः श्रमरहिताः वाजम् अन्नम् असनाम संभजेमहि ॥१३५॥

यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति ।

यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम् ॥१३६॥

(१०.७१.६)

यः पुरुषः सचिविदं सखिविदं सखायं तित्याज त्यजति तस्य वाच्यपि [भागो न अस्ति] नामापि न ग्राह्यम् । ईम् पुरुषः यत् तादृशस्य वाक्यं शृणोति तत् अलकम् अलीकम् व्यर्थमेव शृणोति । हि यस्मात् सुकृतस्य पुण्यस्य पन्थां मार्गं न प्रवेद [न जानाति] ॥१३६॥

अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमा बभूवुः ।

आदघ्नास उपकक्षास उ त्वे ह्रदाइव स्नात्वा उ त्वे ददृश्रे ॥१३७॥

(१०.७१.७)

सर्वे सखायः अक्षण्वन्तः अक्षिमन्तः कर्णवन्तश्च । परन्तु मनोजवेषु मनोव्यापारेषु असमाः अतुल्याः बभूवुः । [तेषु] कश्चिदेव मनःशुद्धो भवतीत्यर्थः । तेषु मध्ये उ [अथ] त्वे केचित् आदघ्नासः आस्यप्रमाणोदकाः [ह्रदाः इव] । केचित् उपकक्षासः कक्षसमीपप्रमाणोदकाः । उ त्वे [अथ] केचित् स्नात्वा स्नानार्हाः ह्रदाः इव ददृश्रे दृश्यन्ते ॥१३७॥

इहैव स्तं मा वि यौष्टं विश्वमायुर्व्यश्नुतम् ।

क्रीळन्तौ पुत्रैर्नप्तृभिर्मोदमानौ स्वे गृहे ॥१३८॥ (१०.८५.४२)

अस्यार्थः त्रुटितः ॥१३८॥

अथ पुरुषसूक्तस्य षोडशर्चस्य यथामति व्याख्या । सहस्रशीर्षेति षोडशर्चं सूक्तम् । श्रीनारायणो नामादिपुरुष ऋषिः । अन्त्या त्रिष्टुप् । शिष्टमानुष्टुभम् । अव्यक्तमहदादिविलक्षणश्चेतनो यः पुरुषः "पुरुषान्न परं किंचिदिति" श्रुतेः (क. उ. ३.११) स एव प्रसिद्धः पुरुषो देवता । तथा चानुक्रान्तम्—"सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबन्तं तु" इति । गतो विनियोगश्च ॥ तत्र क्रमात् षोडशर्चव्याख्या ॥

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।

स भूमिं विश्वतो वृत्वात्यतिष्ठद् दशाङ्गुलम् ॥१३९॥ (१०.९०.१)

सर्वप्राणिसमूहरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा । सहस्रशब्दस्योपलक्षणत्वात् अनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि ब्रह्माण्डस्थसर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात् तदीयान्येवेति सहस्रशीर्षत्वम् । सहस्राक्षः सहस्रपात् । एवं सहस्राक्षित्वं सहस्रपादत्वं च व्यष्टिसमष्टित्वेन । स पुरुषः भूमिं ब्रह्माण्डगोलरूपां विश्वतः

सर्वतः वृत्वा परिवेष्टय दशाङ्गुलम् दशाङ्गुलपरिमितं देशम् अत्यतिष्ठत् अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्य स्थित इत्यर्थः ॥१३९॥

पुरुष एवेदं सर्वं यद् भूतं यच्च च भव्यम्।

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥१४०॥ (१०.९०.२)

यत् इदं वर्तमानं जगत् [तत्] सर्वं पुरुष एव। यत् च भूतं जगत् यत् [च] भव्यं भविष्यजगत्तदपि पुरुष एव। यथा अस्मिन् [कल्पे] वर्तमानाः प्राणिदेहाः सर्वे पुरुषस्याऽवयवाः तथा अतीतागामिनोरपि कल्पयोर्द्रष्टव्यमित्यभिप्रायः। उतापि च अमृतत्वस्य देवत्वस्यायम् ईशानः स्वामी। यत् यस्मात् कारणात् अन्नेन भोग्येनान्नेन निमित्तेन अतिरोहति स्वकीयां कारणावस्थाम् अतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति तस्मात् प्राणिनां कर्मफलभोगाय जगदवस्थास्वीकारान्नेदं तस्य वस्तुत्वमित्यर्थः ॥१४०॥

एतावानस्य महिमातो ज्यायाँश्च पूरुषः।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥१४१॥

(१०.९०.३)

अतीतानागतवर्तमानरूपं जगत् यावदस्ति एतावान् एतावत्सकलभोगार्थं जगदवस्थास्वीकारात् सर्वोऽपि अस्य पुरुषस्य महिमा स्वकीयसामर्थ्यविशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवपुरुषस्तु अतः महिम्नोऽपि ज्यायान् अतिशयेनाभ्यधिकः। एतदुभयं स्पष्टीक्रियते। अस्य पुरुषस्य विश्वा सर्वाणि भूतानि कालत्रयवर्त्तीनि प्राणिजातानि पादः चतुर्थोऽशः। अस्य पुरुषस्य अवशिष्टं त्रिपात् स्वरूपम् अमृतं नाशरहितं सत् दिवि द्योतनात्मके स्वप्रकाशरूपे व्यवतिष्ठत इति शेषः। यद्यपि 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. उप. २.१) इति आम्नातस्य परब्रह्मणः इयत्तायाः अभावात् पादचतुष्टयं निरूपयितुमशक्यं तथापि जगदिदं ब्रह्मरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वोपन्यासः ॥१४१॥

त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवत् पुनः।

ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥१४२॥ (१०.९०.४)

योऽयं त्रिपात् पुरुषः संसारस्पर्शरहितस्वरूपः सोऽयम् ऊर्ध्वः उत् ऐत् अस्मादज्ञान-कार्यात् संसाराद् बहिर्भूतः अत्रत्यैर्गुणदोषैरनुपसृष्टः उत्कर्षेण स्थितवान्। तस्य सोऽयं पादः लेशः। सोऽयम् इह मायायां पुनः अभवत् सृष्टिसंहाराभ्यां पुनः पुनरागच्छति। अस्य सर्वस्य जगतः परमात्मलेशत्वं भगवताप्युक्तं 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' (भ. गी. १०.४२) इति। ततः मायायामागत्यानन्तरं विष्वङ् देवमनुष्यतिर्यगादिरूपेण विविधः सन् व्यक्रामत् व्याप्तवान्। किं कृत्वा साशनानशने अभि अभिलक्ष्य। साशनं भोजनादिव्यवहारोपेतं सचेतनं प्राणिजातम्, अनशनम् अशनेन रहितम् अचेतनं गिरि-नद्यादिकम्। तदुभयं यथा स्यात्तथा स्वयमेव विविधो भूत्वा व्याप्तवानित्यर्थः ॥१४२॥

तस्मा॑द् वि॒राळ॑जायत वि॒राजो॒ अधि॒ पूरु॑षः।
स जा॒तो अत्य॑रिच्यत प॒श्चाद् भूमि॒मथो॑ पु॒रः ॥१४३॥
(१०.९०.५)

विष्वङ् व्यक्रामत् इति यदुक्तं तदेव प्रपञ्च्यते। तस्मात् आदिपुरुषात् विराट् ब्रह्माण्डदेहोपेतः [अजायत] उत्पन्नः। विराजन्ते वस्तून्यत्रेति विराट्। विराजः अधि विराड्देहस्योपरि तमेवाधिकरणं कृत्वा पुरुषः तद्देहाभिमानी कश्चित् पुमान् अजायत। सः अयं सर्ववेदान्तवेद्यः परमात्मा स्वयमेव स्वकीयमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवोऽभवत्। एतच्चाथर्वणिका उत्तरतापनीये विस्पष्टमामनन्ति—'स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव' (नृ. ता. २.१.९) इति। स जातः विराट् पुरुषः अत्यरिच्यत अतिरिक्तोऽभूत्। विराडतिरिक्तो देवतिर्यङ्मनुष्यादिरूपोऽभूत्। पश्चात् देवादिजीवभावादूर्ध्वं भूमिं ससर्जेति शेषः। अथो भूमिसृष्टेरनन्तरं तेषां जीवानां पुरः पूर्यन्ते सप्तभिर्धातुभिरिति पुरः शरीराणि ससर्ज ॥१४३॥

यत् पुरु॑षेण ह॒विषा॑ दे॒वा य॒ज्ञमत॑न्वत।
व॒स॒न्तो अ॑स्यासीदाज्यं॑ ग्री॒ष्म इ॒ध्मः श॒रद्ध॒विः ॥१४४॥
(१०.९०.६)

यत् यदा पूर्वोक्तक्रमेण देवशरीरेषूत्पन्नेषु सत्सु देवाः उत्तरसृष्टिसिद्ध्यर्थं बाह्यद्रव्य-स्यानुत्पन्नत्वेन हविरन्तरासम्भवात् पुरुषमेव मनसा हविष्ट्वेन संकल्प्य पुरुषेण पुरुषाख्येन हविषा मानसं यज्ञम् अतन्वत अन्वतिष्ठन् तदानीम् अस्य यज्ञस्य वसन्तः [वसन्तर्तुरेव आज्यम् आसीत्] तमेवाज्यत्वेन संकल्पितवन्त इत्यर्थः। एवं ग्रीष्मः [इध्मः] आसीत्।

तमेवेध्मत्वेन संकल्पितवन्त इत्यर्थः। तथा शरत् [हविः] आसीत् तामेव हविष्ट्वेन संकल्पितवन्त इत्यर्थः। पूर्वं पुरुषस्य हविःसामान्यरूपत्वेन संकल्पः अनन्तरं वसन्तादीनामाज्यादिविशेषरूपत्वेन संकल्प इति द्रष्टव्यम् ॥१४४॥

तं य॒ज्ञं ब॒र्हिषि॒ प्रौक्ष॒न् पुरु॑षं जा॒तम॑ग्र॒तः ।

तेन॑ दे॒वा अ॑यजन्त सा॒ध्या ऋष॑यश्च॒ ये ॥१४५॥ (१०.९०.७)

[यज्ञं] यज्ञसाधनभूतं तं पुरुषं पशुत्वभावनया यूपे बद्धं बर्हिषि आसन्ने (मानसे ?) यज्ञे प्रौक्षन् प्रोक्षितवन्तः। कीदृशमित्यत्राह। [अग्रतः] सर्वसृष्टेः पूर्वं पुरुषं जातं पुरुषत्वेनोत्पन्नम्। एतच्च प्रागेवोक्तं 'तस्माद्विराळजायत' इति। तेन पुरुषेण पशुना देवाः अयजन्त मानसं यागं निष्पादितवन्तः इत्यर्थः। के ते देवा इत्यत्राह। साध्याः सृष्टिसाधनयोग्याः प्रजापतिप्रभृतयः तदनुकूलाः ऋषयः मन्त्रद्रष्टारः [च] ये सन्ति ते सर्वेऽप्ययजन्त इत्यर्थः॥१४५॥

तस्मा॑द् य॒ज्ञात् स॑र्व॒हुतः॒ संभृ॑तं पृषदा॒ज्यम् ।

प॒शून् ताँश्च॑क्रे वाय॒व्या॑नार॒ण्यान् ग्रा॒म्याश्च॒ ये ॥१४६॥

(१०.९०.८)

सर्वहुतः, सर्वात्मकः पुरुषो यस्मिन् यज्ञे हूयते स सर्वहुत्, तादृशस्तस्मात् मानसात् यज्ञात् पृषदाज्यं दधिमिश्रमाज्यं सम्भृतं सम्पादितम्। दधि च आज्यं चेत्येवमादि भोग्यजातं सर्वं सम्पादितमित्यर्थः। तथा वायव्यान् वायुदेवताकान् तान् लोकप्रसिद्धान् आरण्यान् पशून् चक्रे उत्पादितवान्। आरण्या हरिणादयः। तथा ये च ग्राम्याः गवाश्वादयः तानपि चक्रे। पशूनामन्तरिक्षद्वारा वायुदेवत्यत्वं यजुर्ब्राह्मणे समाम्नायते "वायवः स्थेत्याह। वायुर्वा अन्तरिक्षस्याध्यक्षः अन्तरिक्षदेवत्याः खलु वै पशवः। वायव एवैतान् परिददातीति" (तै. ब्रा. ३.२.१.३) ॥१४६॥

तस्मा॑द् य॒ज्ञात् स॑र्व॒हुत॒ ऋचः॒ सामा॑नि जज्ञिरे ।

छन्दां॑सि जज्ञिरे॒ तस्मा॒द् यजु॒स्तस्मा॑दजायत ॥१४७॥

(१०.९०.९)

सर्वहुतः तस्मात् पूर्वोक्ताद् यज्ञात् ऋचः सामानि [च] जज्ञिरे उत्पन्नानि। तस्मात् यज्ञात् छन्दांसि गायत्र्यादीनि [जज्ञिरे]। तस्मात् यजुः अपि अजायत उत्पन्नम् ॥१४७॥

तस्मादश्वा अजायन्त ये के चोभयादतः ।

गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥१४८॥

(१०.९०.१०)

तस्मात् पूर्वोक्तात् यज्ञात् अश्वाः अजायन्त उत्पन्नाः । ये के च अश्वव्यतिरिक्ताः गर्दभा अश्वतराश्च उभयादतः ऊर्ध्वाधोभागयोरुभयोर्दन्तयुक्ताः सन्ति तेऽपि अजायन्त । तथा तस्माद् यज्ञात् गावः च जज्ञिरे । तस्मात् यज्ञात् अजाः अवयश्च जाताः ॥१४८॥

यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।

मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥१४९॥

(१०.९०.११)

प्रश्नोत्तररूपेण ब्राह्मणादिवर्णसृष्टिं वक्तुं ब्रह्मवादिनां प्रश्नाः उच्यन्ते । प्रजापतेः प्राणरूपा देवाः यत् यदा पुरुषं विराड्रूपं व्यदधुः संकल्पेनोत्पादितवन्तः [ तदा कतिधा कतिभिः प्रकारैः व्यकल्पयन् विविधं कल्पितवन्तः ] । अस्य पुरुषस्य मुखं किम् आसीत् । कौ बाहू अभूताम् । कौ ऊरू कौ च पादौ उच्येते । प्रथमं सामान्यरूपः प्रश्नः पश्चात् मुखं किम् इत्यादिना विशेषविषयाः प्रश्नाः ॥१४९॥

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।

ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥१५०॥

(१०.९०.१२)

इदानीं पूर्वोक्तप्रश्नानामुत्तराणि दर्शयति । अस्य प्रजापतेः ब्राह्मणः ब्राह्मणत्वजातिविशिष्टः पुरुषः मुखम् आसीत् मुखादुत्पन्न इत्यर्थः । यः अयं राजन्यः क्षत्रियत्वजातिमान् पुरुषः सः बाहू कृतः बाहुत्वेन निष्पादित इति, बाहुभ्यामुत्पादित इत्यर्थः । अस्य प्रजापतेः यत् यौ ऊरू तद्रूपः वैश्यः संपन्नः । तथा अस्य पुंसः पद्भ्यां पादाभ्यां शूद्रः शूद्रत्वजातिमान् अजायत । इयं च मुखादिभ्यो ब्राह्मणादीनामुत्पत्तिः यजुःसंहितायां सप्तमकाण्डे 'स मुखतस्त्रिवृतं निरमिमीत' (तै. सं. ७.१.१.४) इत्यादौ विस्पष्टमाम्नाता । अतः प्रश्नोत्तरे उभे अपि तत्परतया योजनीये ॥१५०॥

चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।

मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत ॥१५१॥

(१०.९०.१३)

यथा दध्यादिद्रव्याणि गवादयः पशवः ऋगादयो वेदाः ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्माद्विराट्पुरुषादेवोत्पन्ना इत्याह । प्रजापतेः मनसः सकाशात् चन्द्रमाः जातः । चक्षोः चक्षुषः सूर्यो अजायत । मुखात् इन्द्रः च अग्निः च द्वौ देवावुत्पन्नौ । अस्य प्राणात् वायुः अजायत ॥१५१॥

नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।

पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥१५२॥

(१०.९०.१४)

यथा चन्द्रादयो देवाः मनःप्रभृतिभ्योऽकल्प्यन्त तथा अन्तरिक्षादिलोकान् प्रजापतेर्नाभ्यादिभ्यो देवाः अकल्पयन् उत्पादितवन्तः । एतदेव दर्शयति । नाभ्याः प्रजापतेर्नाभेः अन्तरिक्षम् आसीत् । शीर्ष्णः शिरसः द्यौः समवर्तत उत्पन्ना । अस्य पद्भ्यां भूमिः उत्पन्ना । अस्य श्रोत्रात् दिशः उत्पन्नाः इति ॥१५२॥

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः ।

देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥१५३॥

(१०.९०.१५)

अस्य साङ्कल्पिकयज्ञस्य सप्त गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन् । ऐष्टिकस्याहवनीयस्य त्रयः परिधयः उत्तरवेदिकास्त्रयः आदित्यश्च सप्तमः परिधिप्रतिनिधिरूपः । अत एव आम्नायते—"न पुरस्तात् परि दधात्यादित्यो ह्येवोद्यन् पुरस्ताद् रक्षांस्यपहन्ति" (तै. सं. २.६.६.३) इति । एवम् आदित्यसहिताः सप्त परिधयः अत्र सप्तच्छन्दोरूपाः । तथा समिधः त्रिः सप्त त्रिगुणितसप्तसंख्याकाः एकविंशतिः कृताः । "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः" (तै. सं. ५.१.१०.३) इति श्रुताः पदार्था एकविंशतिदारुयुक्तेध्मत्वेन भाविताः । यत् यः पुरुषो वैराजोऽस्ति तं पुरुषं देवाः प्रजापतिप्राणेन्द्रियरूपाः यज्ञं तन्वानाः मानसं यज्ञं कुर्वाणाः पशुम् अबध्नन् विराट्पुरुषम् एव पशुत्वेन भावितवन्तः । एतदेवाभिप्रेत्य पूर्वं 'यत्पुरुषेण हविषा' इत्युक्तम् ॥१५३॥

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।

ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः ॥१५४॥

(१०.९०.१६)

अस्याः पूर्वं प्रपञ्चेनोक्तम् अर्थं संक्षिप्य दर्शयति । देवाः प्रजापतिप्राणरूपाः यज्ञेन यथोक्तेन मानसेन सङ्कल्पेन यज्ञं यथोक्तयज्ञस्वरूपं प्रजापतिम् अयजन्त पूजितवन्तः । तस्मात् पूजनात् तानि प्रसिद्धानि धर्माणि जगद्रूपविकाराणां धारकाणि प्रथमानि मुख्यानि आसन् । एतावता सृष्टिप्रतिपादकसूक्तभागार्थः संगृहीतः । अथोपासनतत्फलानुवादकभागार्थः संगृह्यते । यत्र यस्मिन् विराट्प्राप्तिरूपे नाके पूर्वे साध्याः पुरातनाः विराडुपास्तिसाधकाः देवाः सन्ति तत् नाकं विराट्प्राप्तिरूपं स्वर्गं ते महिमानः तदुपासका महात्मानः सचन्त समवयन्ति प्राप्नुवन्तीति ॥१५४॥

*इति पुरुषसूक्तव्याख्या ॥*

*अथ पुरूरवोर्वशीसंवादः*

हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु ।

न नौ मन्त्रा अनुदितास एते मयस्करन् परतरे चनाहन् ॥१५५॥

(१०.९५.१)

पुरूरवो जायां वदति । हे जाये मनसा घोरे तिष्ठ । मिश्रा मिश्राणि नु अद्य उक्ति[प्रत्युक्ति]रूपाणि वचांसि कृणवावहै करवावहै । नौ आवयोः मन्त्राः रहस्यार्थाः एते विवक्षिताः । चनेति चार्थे । परतरे अहन् चरमे अहनि च अनुदितासः अनुत्पन्नाः (?) सन्तः मयः सुखं न करन् न कुर्वन्ति ॥१५५॥

किमेता वाचा कृणवा तवाहं प्राक्रमिषमुषसामग्रियेव ।

पुरूरवः पुनरस्तं परेहि दुरापना वातइवाहमस्मि ॥१५६॥

(१०.९५.२)

उर्वश्याह। एतया तव केवलया वाचा अहं (?) किं कृणव करवाव। अहं त्वत्सकाशात् प्राक्रमिषं गतवती। तत्र दृष्टान्तः। उषसाम् अग्रियेव। हे पुरूरवः त्वम् अस्तं गृहं परा इहि [परा]गच्छ। अहं वात इव दुरापना दुष्प्रापा अस्मि ॥१५६॥

इषुर्न श्रिय इषुधेरसना गोषाः शतसा न रंहिः।

अवीरे क्रतौ वि दविद्युतन्नोरा न मायुं चितयन्त धुनयः ॥१५७॥

(१०.९५.३)

अनया पुरूरवाः विरहक्लेशं तां प्रति ब्रूते। इषुधेः सकाशात् निर्गतः इषुः त्वद्विरहात् असना [असनायै प्रक्षेप्तुं श्रिये] जयश्रिये न भवति। तथा रंहिः वेगवान् अहं शत्रूणां गोषाः तैः [गवां] संभक्ता मिलिता (?) नाभवम्। तथा शतसाः शतानामपरिमितानां शत्रुधनानां संभक्ता नाभवम्। किं च अवीरे वीरवर्जिते क्रतौ युद्धयज्ञेऽपि न वि दविद्युतत् न [विद्योतते] मत्सामर्थ्यम्। धुनयः [कम्पयितारः] अस्मदीयाः भटाः उरा उरौ [विस्तीर्णे संग्रामे] मायुम्। मीयते प्रक्षिप्यत इति मायुः शब्दः। तं न चितयन्त (चिती संज्ञाने) नाबुध्यन्त ॥१५७॥

अतः परम् ऋग्द्वयं परित्यक्तम् ॥

या सुजूर्णिः श्रेणिः सुम्नआपिर्ह्रदेचक्षुर्न ग्रन्थिनी चरण्युः।

ता अञ्जयोऽरुणयो न सस्रुः श्रिये गावो न धेनवोऽनवन्त ॥१५८॥

(१०.९५.६)

पुरूरवसो वाक्यम्। सुजूर्णिः श्रेणिः सुम्नआपिः ह्रदेचक्षुः इति चतस्रः सख्यः। नकारः समुच्चये। ताभिश्चतसृभिः ग्रन्थिनी सहिता चरण्युः चरणशीला उर्वशी आजगामेति शेषः। ताः सख्यः अञ्जयः आभरणोपेताः अरुणयः अरुणवर्णाः न सस्रुः पूर्ववत् न गच्छन्ति मदानुकूल्यं न कुर्वन्तीत्यर्थः। श्रिये श्रयणाय धेनवः नवप्रसूताः गाव इव अनवन्त [गावः यथा शब्दायन्ते] तथा न शब्दयन्तीति व्यतिरेके दृष्टान्तः। मच्छब्दं न कुर्वन्तीत्यर्थः (?) ॥१५८॥

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः स्वगूर्ताः।

महे यत् त्वा पुरूरवो रणायावर्धयन् दस्युहत्याय देवाः ॥१५९॥

(१०.९५.७)

अस्मिन् पुरूरवसि जायमाने वर्धमाने ग्नाः अप्सरसोऽपि सम् आसत सङ्गताः अभवन्। मयि स्थितायां तास्वप्यासक्त इति भावः। उत अपि च ईम् एनं पुरूरवसं स्वगूर्ताः स्वयंगामिन्यः नद्यः तासामप्सरसामाश्रयभूताः अवर्धयन्। मयि सत्यपि अन्यासु [अप्सरःसु तं] प्रेरितवत्य इत्यर्थः। किं च हे पुरूरवः [यत् यस्मात्] त्वा महे महते रणाय देवाः दस्युहत्याय दस्युहननाय अवर्धयन्। तेन भोगविघ्नः सूचितः ॥१५९॥

सचा यदासु जहतीष्वत्कममानुषीषु मानुषो निषेवे ।

अप स्म मत् तरसन्ती न भुज्युस्ता अत्रसन् रथस्पृशो नाश्वाः ॥

॥१६०॥ (१०.९५.८)

त्रीण्यैळवाक्यानि। यत् यदा सचा सहायभूतः देवानामिति शेषः [पुरूरवाः] अत्कं स्वकीयरूपं जहतीषु [परित्यजन्तीषु] अमानुषीषु आसु अप्सरस्सु मानुषः मानुषः सन् निषेवे तदा ताः अप्सरसः मत् मत्तः अप अपसृत्य अत्रसन् गच्छन्ति स्म। अत्र दृष्टान्तः। तरसन्ती, [तरसन्] मृगनाम, [मृग]विशेषस्त्री भुज्युः भोगसाधनभूता सा यथा व्याघ्रात् पलायत इति भावः। दृष्टान्तान्तरम्। न इवार्थः। रथस्पृशः न रथनियुक्ताः अश्वाः यथा पलायन्ते तथैव ॥१६०॥

यदासु मर्तो अमृतासु निस्पृक् सं क्षोणीभिः क्रतुभिर्न पृङ्क्ते ।

ता आतयो न तन्वः शुम्भत स्वा अश्वासो न क्रीळयो दन्दशानाः ॥

॥१६१॥ (१०.९५.९)

यत् यदा आसु अमृतासु अप्सरस्सु मर्तः मनुष्यः पुरूरवाः निस्पृक् निःशेषेण स्पृशन् क्षोणीभिः वाग्भिः क्रतुभिः [न] कर्मभिश्च सं पृङ्क्ते संपर्कं करोति। नकारः समुच्चयार्थः। तदा ताः अप्सरसः आतयः आतिभूताः स्वाः तन्वः आत्मीयानि रूपाणि न शुम्भत न प्रकाशयन्ति। [अश्वासो न] अश्वा इव क्रीळयः संक्रीडमानाः दन्दशानाः दन्दशूकाः सर्पवजिह्वाभिः [आत्मीयाः] सृक्काः भक्षयन्तः। [ते यथा] स्वरूपं न प्रयच्छन्ति अश्ववाराय [तद्वत्] ॥१६१॥

विद्युन्न या पतन्ती दविद्योद् भरन्ती मे अप्या काम्यानि ।

जनिष्टो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥१६२॥

(१०.९५.१०)

निन्दामन्यासां कृत्वोर्वशीं स्तौति। या उर्वशी विद्युत् न विद्युदिव पतन्ती दविद्योत् द्योतते। कीदृशी। अप इत्यन्तरिक्षनाम। तत्सम्बन्धीनि अप्या अप्यानि काम्यानि उदकानि मे मह्यं भरन्ती सम्पादयन्ती। [सा] यदा आगता तदा तस्याः सकाशात् अपः यशसा व्याप्तः नर्य्यः नरेभ्यो हितः सुजातः सुजननः पुत्रः जनिष्टो अजनिष्ट। सा उर्वशी तस्मै दीर्घम् आयुः प्र तिरत वर्धयति ॥१६२॥

जज्ञिष इत्था गोपीथ्याय हि दधाथ तत् पुरूरवो म ओजः।
अशासं त्वा विदुषी सस्मिन्नहन् न म आशृणोः किमभुग् वदासि ॥
॥१६३॥ (१०.९५.११)

[उर्वशीवाक्यम्।] त्वम् इत्था इत्थं गोपीथ्याय गौः पृथिवी तस्याः [पीथ्याय] रक्षणाय मदुदरे जज्ञिषे हि जातोऽसि। पुत्ररूपेणेति भावः। हे पुरूरवः त्वं मे उदरे ओजः रेतोरूपं तेजो दधाथ निहितवानसि। [अहं] विदुषी भावि कार्यं जानती सस्मिन् सर्वस्मिन् (वर्णलोपः) अहनि त्वा अशासं शिक्षितवत्यस्मि। त्वं मे वचः न आशृणोः न कृतवान्। त्वम् अभुक् अभोक्ता मद्वचनस्य अपालयिता इदानीं किं वदासि 'हये जाये' इत्यादिकम् ॥१६३॥

कदा सूनुः पितरं जात इच्छाच्चक्रन्नाश्रु वर्तयद् विजानन्।
को दम्पती समनसा वि यूयोदध यदग्निः श्वशुरेषु दीदयत् ॥१६४॥
(१०.९५.१२)

अथ पुरूरवसो वाक्यम्। सूनुः तवोदरे जातः सन् पितरं मां कदा [इच्छात्] इच्छेत्। कदा वा सूनुः विजानन् मां पितरमधिगच्छन् चक्रन् क्रन्दमानः अश्रु न वर्तयत्। नेति चार्थः। कः [किंविधः सन्] सूनुः समनसा शोभनमनस्कौ दम्पती आवां वि यूयोत् विश्लेषयेत्। अध अधुना यत् यदा अग्निः तेजस्वी त्वत्पुत्रः श्वशुरेषु त्वदीय-श्वशुरगृहेषु दीदयत् दीप्यते ॥१६४॥

प्रति ब्रवाणि वर्तयते अश्रु चक्रन् न क्रन्ददाध्ये शिवायै।
प्र तत् ते हिनवा यत् ते अस्मे परेह्यस्तं नहि मूर मापः ॥१६५॥
(१०.९५.१३)

उर्वश्युक्तिः। हे पुरूरवः प्रति ब्रवाणि त्वां प्रतिवच्मि। त्वदपत्यम् अश्रु वर्तयते वर्तयिष्यति। आध्ये आध्याते शिवायै शिवे कल्याणे समुपस्थिते सति चक्रन् रुदन् अश्रूणि विमुञ्चन् [न] क्रन्दत् आक्रन्दन् रोत्स्यति चेत्यर्थः। चार्थे नकारः। तत् अपत्यं ते तुभ्यं हिनव प्रहिणोमि यदपत्यं ते [तव संबन्धि] अस्मे अस्मासु निहितमिति शेषः। त्वम् अस्तं गृहं परा इहि गच्छ। हे मूर मूढ त्वं मां नहि आपः न प्राप्नोषि (आप्लृ व्याप्तौ)॥१६५॥

सुदेवो अद्य प्रपतेदनावृत् परावतं परमां गन्तवा उ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः॥१६६॥
(१०.९५.१४)

ऐळोक्तिः। हे उर्वशि सुदेवः [त्वया सह सुक्रीडः] पुरूरवाः त्वां विना अद्य प्रपतेत् अत्रैव पततु। अथवा [अनावृत्] अनावृतः (अनावृत्तः?) विवस्त्रः (?) सन् परमां परावतं दूरादपि दूरदेशं गन्तवै गच्छेत्। महाप्रस्थानं कुर्यादिति भावः। अध अथवा निर्ऋतेः भूम्याः उपस्थे शयनं कुर्यात्। यद्वा निर्ऋतिः पापदेवता, तस्याः समीपे शयीत म्रियताम्। अध अथवा एनम् ऐळं वृकाः रभसासः वेगवन्तः अद्युः भक्षयन्तु॥१६६॥

पुरूरवो मा मृथा मा प्र पप्तो मा त्वा वृकासो अशिवास उ क्षन्।
न वै स्त्रैणानि सख्यानि सन्ति सालावृकाणां हृदयान्येता॥१६७॥
(१०.९५.१५)

[उर्वशी प्रत्युवाच] हे पुरूरवः त्वं मा मृथाः [मृतिं मा प्राप्नुहि]। मा च प्र पप्तः अत्रैव पतनं मा कार्षीः। त्वाम् अशिवासः अशिवाः वृकाः मा उ क्षन् [मा] भक्षयन्तु। उ इति एवकारार्थः। स्त्रैणानि स्त्रीभिः कृतानि सख्यानि न वै सन्ति। एता एतानि सख्यानि सालावृकाणां हृदयानि॥१६७॥

यद् विरूपाचरं मर्त्येष्ववसं रात्रीः शरदश्चतस्रः।
घृतस्य स्तोकं सकृदह्न आश्नां तादेवेदं तातृपाणा चरामि॥१६८॥
(१०.९५.१६)

उर्वश्युक्तिः। विरूपा मनुष्यसम्पर्काद्विगतसहजदेवरूपा यद्वा पत्यानुकूल्यार्थं गृहीतनानाविधरूपा अहं मर्त्येषु यत् यदा अचरं तदानीं रात्रीः रमयित्रीः [चतस्रः] शरदः वर्षाणि अवसं न्यवसम्। घृतस्य स्तोकम् अल्पं घृतं अह्नः अहनि सकृदेव आश्नां भक्षितवती। तादेव तेनैव स्तोकेन घृतेन इदं सम्प्रति तातृपाणा तृप्ता सती चरामि गच्छामि। विरोधलक्षणया अतृप्तेत्यर्थः ॥१६८॥

अ॒न्त॒रि॒क्ष॒प्रां रज॑सो वि॒मानी॒मुप॑ शिक्षाम्युर्व॒शीं वसि॑ष्ठः।

उप॑ त्वा रा॒तिः सु॒कृत॑स्य॒ तिष्ठा॒न् नि व॑र्तस्व॒ हृद॑यं तप्यते मे ॥१६९॥

(१०.९५.१७)

ऐळोक्तिः। अहम् अन्तरिक्षप्रां स्वतेजसा अन्तरिक्षस्य पूरयित्रीं तथा रजसः रञ्जकस्योदकस्य [विमानीम्] निर्मात्रीम्। (मदर्थमिति शेषः।) उर्वशीं वसिष्ठः सपत्नीनां मध्ये मानेन वासयिता उप शिक्षामि वशं नयामि। ऐळः सुकृतस्य शोभनकर्मणः रातिः दाता त्वाम् उप तिष्ठात् उपतिष्ठतु। नि वर्तस्व यतो मे हृदयं तप्यते ॥१६९॥

इति॑ त्वा दे॒वा इ॒म आ॑हुरैळ॒ यथे॒मे॒तद् भव॑सि मृ॒त्युब॑न्धुः।

प्र॒जा ते॑ दे॒वान् ह॒विषा॑ यजाति स्व॒र्ग उ॒ त्वमपि॑ मादयासे ॥१७०॥

(१०.९५.१८)

उर्वशीवाक्यम्। हे ऐळ इमे देवाः त्वाम् इति एतत् आहुः यथा त्वं मृत्युबन्धुः मा भवसि। प्रजा प्रकर्षेण जायमानस्त्वं ते देवान् तव यष्टव्यान् हविषा यजासि यजसि। जीवन् सन् यज्ञान् करिष्यसीत्यर्थः। यदि चोर्वशीकामना तर्हि स्वर्गे वयमिव त्वमपि उर्वश्या सह मादयासे मोदिष्यसि। एवमाहुरित्यर्थः ॥१७०॥

*इत्युर्वशीराजसंवादः ॥*

*अथ दक्षिणाप्रशंसा*

आ॒विर॑भून् महि॒ माघो॑नमेषां॒ विश्वं॑ जी॒वं तम॑सो॒ निर॑मोचि।

महि॒ ज्योतिः॑ पि॒तृभि॑र्द॒त्तमागा॑दु॒रुः पन्था॑ दक्षिणाया अदर्शि ॥१७१॥

(१०.१०७.१)

माघोनं मघवा चैत्रमासस्य सूर्यः तत्सम्बन्धि महि महत्तेजः एषां यजमानानां यागसिद्ध्यर्थम् [आविः अभूत्] आविर्भूतम्। ततः विश्वं जीवं स्थावरजङ्गमात्मकं तमसः सकाशात् निरमोचि निर्मुक्तम् अभूत्। अथानन्तरं पितृभिः देवैः दत्तं महि महत् ज्योतिः सूर्याख्यम् आगात् आगच्छति परिभ्रमति। तेन ज्योतिषा दक्षिणायाः दक्षिणदिशः। इदं चोपलक्षणम्। सर्वदिशामपि। उरुः महान् पन्थाः अदर्शि ॥१७१॥

उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण।

हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥१७२॥

(१०.१०७.२)

दक्षिणा देयत्वेन येषां ते दक्षिणावन्तः यजमानाः दिवि द्युलोके उच्चा अस्थुः तिष्ठन्ति। सामान्येनोक्त्वा दानविशेषेण फलविशेषमाह। अश्वदाः अश्वानां दातारः ये यजमानाः ते सूर्येण सह तिष्ठन्ति। ये हिरण्यदाः हिरण्यदातारः ते अमृतत्वम् अमरणधर्मत्वं देवत्वं भजन्ते। "अमृतं वै हिरण्यम्" (तै. सं. ५.२.७.२) इति श्रुतेः। तथा, "सौम्यं वै वासः" (तै. ब्रा. २.२.५) इति श्रवणात्। हे सोम वासोदाः [ये] त्वद्दैवत्यवस्त्रदातारः सन्ति ते त्वया सह तिष्ठन्तीति शेषः। एते सर्वे आयुः जीवनं प्र तिरन्ते प्रवर्धयन्ति। (प्रपूर्वस्तिरतिर्वृद्ध्यर्थः) ॥१७२॥

दैवी पूर्तिर्दक्षिणा देवयज्या न कवारिभ्यो नहि ते पृणन्ति।

अथा नरः प्रयतदक्षिणासोऽवद्यभिया बहवः पृणन्ति ॥१७३॥

(१०.१०७.३)

दैवी देवप्रीत्यर्थं दीयमाना देवयज्या देवयागाङ्गभूता दक्षिणा पूर्तिः पालिनी उत्तमेत्यर्थः। [सा च] कवारिभ्यः कुत्सितेभ्यः [अयष्टृभ्यः] न दातव्येति शेषः। हि यतः ते कुत्सिताः देवान् स्तुतिभिर्हविर्भिर्वा न पृणन्ति न प्रीणयन्ति (पृण प्रीणने)। अथ प्रयतदक्षिणासः [दत्तदक्षिणाः] अपि [बहवः] नरः पुमांसः यत् कवारिभ्यः [अयष्टृभ्यः] पृणन्ति प्रीणयन्ति तत् अवद्यभिया निन्दाभीत्या ॥१७३॥

शतधारं वायुमर्कं स्वर्विदं नृचक्षसस्ते अभि चक्षते हविः।

ये पृणन्ति प्र च यच्छन्ति सङ्गमे ते दक्षिणां दुहते सप्तमातरम् ॥

॥१७४॥ (१०.१०७.४)

ये अर्कम् आदित्यं, नृचक्षसः नृणां द्रष्टॄन्, कदास्मभ्यं हविर्दास्यन्तीति द्रष्टॄनिन्द्रादिदेवांश्चाभिलक्ष्य हविः चक्षते दातुं जानन्ति । ये च संगमे, संगमधिगच्छन्ति ऋत्विजो यत्रेति स संगमो यज्ञः, तस्मिन् देवेभ्यः पृणन्ति स्तुतिभिः प्रीणयन्ति देवेभ्यश्च हविः प्रयच्छन्ति । (देवान् अभिलक्ष्य हविः प्रचक्षते दातुं जानन्ति प्रयच्छन्ति [च] ) ते सप्तमातरं सप्तसंख्याकमातृकां दक्षिणां दुहते प्राप्नुवन्ति । कीदृशमादित्यं, शतधारं बहुधारणोपेतं, वायुं वायुनामकम्, आदित्यस्य जगद्रूपत्वात्, स्वर्विदं स्वर्गस्य लम्भकम् ॥१७४॥

दक्षिणावान् प्रथमो हूत एति दक्षिणावान् ग्रामणीरग्रमेति ।

तमेव मन्ये नृपतिं जनानां यः प्रथमो दक्षिणामाविवाय ॥१७५॥

(१०.१०७.५)

दक्षिणावान् यजमानः हूतः सन् प्रथमः एति सभासु प्रथमं लोकाः तम् आह्वयन्ति तथा ग्रामणीः सन् अग्रम् एति । [तमेव नृपतिं नराणां पालयितारमिति मन्ये ऋषिरहमवबुध्ये] यः [जनानां] दक्षिणाम् आविवाय [आगमयति] प्रापयति ॥१७५॥

तमेव ऋषिं तमु ब्रह्माणमाहुर्यज्ञन्यं सामगामुक्थशासम् ।

स शुक्रस्य तन्वो वेद तिस्रो यः प्रथमो दक्षिणया रराध ॥१७६॥

(१०.१०७.६)

तम् एव ऋषिम् अतीन्द्रियार्थदर्शिनम् आहुः । यज्ञन्यं यज्ञनेतारं सामगां सामगातारं उक्थशासम् उक्थशंसितारं होतारमाहुः । सः शुक्रस्य अग्नेः तिस्रः तन्वः आहवनीयाद्यात्मिकाः वेद । प्रथमः दापने मुख्यः यः दक्षिणया ऋत्विगादीन् रराध आराधितवान्॥१७६॥

दक्षिणाश्वं दक्षिणा गां ददाति दक्षिणा चन्द्रमुत यद्धिरण्यम् ।

दक्षिणान्नं वनुते यो न आत्मा दक्षिणां वर्म कृणुते विजानन् ॥१७७॥

(१०.१०७.७)

[ दक्षिणा तद्दातृभ्यः अश्वं ददाति । तथा च गां ददाति । तथा ] चन्द्रं सुवर्णं [उत अपि च] हिरण्यं रजतं [ददाति । किं च सा अन्नं] वनुते । वनोतिरत्र दानार्थः । यः विजानन् दक्षिणाख्यं वर्म [कवचं] कृणुते सः [नः] आत्मा (?) ॥१७७॥

न भोजा मम्रुर्न न्यर्थमीयुर्न रिष्यन्ति न व्यथन्ते ह भोजाः ।

इदं यद् विश्वं भुवनं स्वश्चैतत् सर्वं दक्षिणैभ्यो ददाति ॥१७८॥

(१०.१०७.८)

भोजाः दातारः न मम्रुः न म्रियन्ते । न्यर्थम् (ऋ गतौ) अनिष्टां गतिं न ईयुः । [तथा] न रिष्यन्ति [अहिंसिता भवन्ति । अतएव भोजाः न व्यथन्ते ।] हशब्दः प्रसिद्धौ इदं विश्वं सर्वं भुवनं यत् अस्ति यच्च स्वः स्वर्गलोकश्च एतत् सर्वं दक्षिणा [एभ्यः] दातृभ्यः ददाति ॥१७८॥

भोजा जिग्युः सुरभिं योनिमग्रे भोजा जिग्युर्वध्वं१ या सुवासाः ।

भोजा जिग्युरन्तःपेयं सुराया भोजा जिग्युर्ये अहूताः प्रयन्ति ॥१७९॥

(१०.१०७.९)

[भोजाः दातारः अग्रे प्रथममेव] योनिं सर्वकामप्राप्तिहेतुं सुरभिं कामधेनुं [जिग्युः । अपि च ते] तां वध्वं वधूं नवोढां स्त्रीं जिग्युः । कीदृशीं, या सुवासाः । किंच ते शत्रूणां सुरायाः अन्तःपेयं मदं जिग्युः तेषां शत्रूणां गर्वपरिहारं कुर्वन्ति । ये अहूताः बलाधिक्येन [अनाहूयमानाः] प्रयन्ति प्रमुखमागच्छन्ति तान् भोजाः दक्षिणादातारो जनाः [जिग्युः] जयन्ति ॥१७९॥

भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या३ शुम्भमाना ।

भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ॥१८०॥

(१०.१०७.१०)

भोजाय दात्रे अश्वम् आशुं शीघ्रगामिनम् [अश्वं] सं मृजन्ति कण्टकलोहयन्त्रेण कण्डूयन्ति । किंच भोजाय शुम्भमाना शरीरावयवसन्निवेशविशेषशोभना कन्या आस्ते । इदं हृदयाह्लादकं वेश्म गृहं पुष्करिणीव । पुष्कराणि पद्मानि सन्ति यस्यां सा पुष्करिणी सा यथा पद्मादिभिरलंकृता भवति तद्वत् गृहं परिष्कृतं वितानादिभिरलंकृतं [देवमानेव] देवमानमिव [देवयानमिव] चित्रं मनोहरं तस्य भवति ॥१८०॥

भोजमश्वाः सुष्ठुवाहो वहन्ति सुवृद् रथो वर्तते दक्षिणायाः ।
भोजं देवासोऽवता भरेषु भोजः शत्रून्त्समनीकेषु जेता ॥१८१॥
(१०.१०७.११)

सुष्ठुवाहः शोभनवहनसमर्थाः अश्वाः भोजं दातारं वहन्ति (वह प्रापणे)। दक्षिणायाः दातुर्यजमानस्य सुवृत् सुष्ठु चक्रादिवर्तनं यस्य सः अश्वादिसहितो रथो वर्तते। देवासः हे देवाः भरेषु, भ्रियते आहवनीयादिरूपेणाऽग्निरत्रेति भराः यज्ञाः तेषु, यद्वा भृ भर्त्सने, भृणन्ति भर्त्सयन्ति योद्धारोऽत्रेति भराः संग्रामास्तेषु [भोजम्] अवत। ततः युष्माभिः पालितः भोजः धनादिदाने जनानां भोजयिता सन् समनीकेषु संग्रामेषु शत्रून् जेता जयशीलो भवतु ॥१८१॥

*[अथ] धनान्नदानप्रशंसा अन्नस्तुतिर्व्याख्या–"न वा उ भिक्षुर्धनान्नप्रशंसेति"* ।

न वा उ देवाः क्षुधमिद् वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते ॥१८२॥
(१०.११७.१)

[देवाः सर्वेषां क्षुधं] न ददुः। इदिति निश्चये। किन्तु वधम् इत् वधमेव ददुः। आशितम् अदत्त्वा भुञ्जानं मृत्यवः उप गच्छन्ति। चार्थे उतशब्दः। पृणतः प्रयच्छतः जनस्य रयिः धनं नोप दस्यति नोपक्षीयते (दसु उपक्षये)। अपृणन् अप्रयच्छन् मर्डितारम् आत्मनः सुखयितारं न विन्दते न प्राप्नोति ॥१८२॥

य आध्राय चकमानाय पित्वोऽन्नवान्त्सन् रफितायोपजग्मुषे ।
स्थिरं मनः कृणुते सेवते पुरोतो चित् स मर्डितारं न विन्दते ॥१८३॥
(१०.११७.२)

यः पुरुषः अन्नवान् सन्नपि आध्राय दुर्बलाय पित्वः अन्नानि चकमानाय कामयमानाय रफिताय दारिद्र्येण हिंसिताय (रफि हिंसार्थः) उपजग्मुषे गृहं प्रत्यागताय अन्नादि दातुं मनः स्वीयमन्तःकरणम् [अदाने] स्थिरं कृणुते कुरुते उतो [पुरः तस्य] पुरस्तादेवान्नादि सेवते च [सः मर्डितारं सुखयितारं नाप्नोति] ॥१८३॥

स इद् भोजो यो गृहवे ददात्यन्नकामाय चरते कृशाय ।

अरमस्मै भवति यामहूता उतापरीषु कृणुते सखायम् ॥१८४॥

(१०.११७.३)

यः गृहवे गृहागताय चरते अध्वनीनाय, "अध्वनीनोऽतिथिर्ज्ञेय" इति मनुस्मृतेः, दारिद्र्येण कृशाय अन्नं ददाति स इत् स एव भोजः दाता। अस्मै दात्रे यामहूतौ, यामाः गन्तारो देवाः हूयन्ते आहूयन्तेऽत्रेति यज्ञः तस्मिन्, अरम् अलं पर्याप्तं भवति। अन्नमिति शेषः। उत किंच अपरीषु शात्रवीषु सेनासु दाता वैरिणमपि सखायं कृणुते करोति ॥१८४॥

न स सखा यो न ददाति सख्ये सचाभुवे सचमानाय पित्वः ।

अपास्मात् प्रेयान् न तदोको अस्ति पृणन्तमन्यमरणं चिदिच्छेत् ॥

॥१८५॥ (१०.११७.४)

यः सख्ये [सखिजनाय] सचाभुवे सह वसते सचमानाय सेवमानाय पित्वः अन्नानि न ददाति सः न सखा, "भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान्" इति यमस्मृतेः। यद्यतिथिः सखा वा अस्मात् अदातुः सख्युर्वा सकाशात् अप प्रेयात् परित्यज्य गच्छेत् तर्हि तत् ओकः गृहं न अस्ति [न भवति],. चित् चेत् स गतः अन्यं [पृणन्तम् अन्नादिकं प्रयच्छन्तम्] अरणं दातारम् इच्छेत् गच्छेत्। अन्यत्र गमनात् पूर्वं नाकारितश्चेत्तदा गृहनाश इत्यर्थः ॥१८५॥

पृणीयादिन् नाधमानाय तव्यान् द्राघीयांसमनु पश्येत पन्थाम् ।

ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुप तिष्ठन्त रायः ॥१८६॥

(१०.११७.५)

तव्यान् तवीयान् कृशोऽपि (?) पुरुषः, धनहीन इति यावत्, नाधमानाय याचमानाय पृणीयात् इत् दद्यादेव (पॄ पालनपूरणयोः)। सः द्राघीयांसं [पन्थां] पन्थानं दीर्घपुण्यमार्गम् अनु पश्येत। हि यस्मात् रायः धनानि खलु निश्चयेन ओ [आ उ] वर्तन्ते एकत्र न तिष्ठन्तीत्यर्थः। तत्र दृष्टान्तः। रथ्या रथसंबन्धीनि चक्रा चक्राणि यथा उपर्यधश्चावर्तन्ते, तद्वत् अन्यमन्यं पुरुषं रायो धनानि उप तिष्ठन्ते ॥१८६॥

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत् स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥१८७॥
(१०.११७.६)

अदातारं दूषयति । अप्रचेताः अप्रकृष्टज्ञानः, दाने यस्य चेतो न भवति सः, मोघं व्यर्थमेव अन्नं विन्दते लभते । (विद्लृ लाभे, तौदादिकः । शे मुचादीनाम् (पा ७.१. ५९) इति नुमागमः ।) इदं सत्यं यथार्थमेव ब्रवीमि ऋषिरहं वदामि । न केवलं व्यर्थं [किंतु] तस्य पुरुषस्य सः वधः इत् वध एव । अथवा स निरर्थको वध एव यः पुरुष अर्यमणम् । उपलक्षणमिदम् । सर्वान् देवान् न पुष्यति हविःप्रदानेन [न पोषयति] । नापि सखायम् अपि आगतमतिथिमित्रवर्गं च न पोषयति । (पुष पुष्टौ, दैवादिकः । यच्छब्दाध्याहारात् अनिघातः ।) अत एव केवलादी (अदेः, सुप्यजातौ (पा ३.२.७८) इति णिनिः, अत उपधालक्षणा वृद्धिः ।) केवलमेकोऽन्नं भुञ्जानः अयं केवलाघो भवति केवलं पापवान् भवति । पापमेव केवलमवशिष्यते, नैहिकं नामुष्मिकमिति । तस्माद्यथाकथंचिद्दातव्यमिति अभिप्रायः ॥१८७॥

कृषन्नित् फाल आशितं कृणोति यन्नध्वानमप वृङ्क्ते चरित्रैः ।
वदन् ब्रह्मावदतो वनीयान् पृणन्नापिरपृणन्तमभि ष्यात् ॥१८८॥
(१०.११७.७)

कृषन् कृषिं कुर्वन् पुरुषः फाले (!) काष्ठे आशितं स्थितं कीटादि कष्टभोक्तारं (!) कृणोति करोति । अध्वानं यन् गच्छन् पुरुषः चरित्रैः स्वकीयैर्गमनैः अन्यान् अप वृङ्क्ते रोधयति (?) (वृजी वर्जने) । वदन् [शास्त्रार्थं ब्रुवाणः] ब्रह्मा ब्राह्मणः अवदतः अज्ञस्य जनस्य वनीयान् प्रियकरो भवति । (वनतेः [तृजन्तस्य] ईयसुन् ।) तथा पृणन् ददन् आपिः दाता अपृणन्तम् अदातारं प्रति अभि ष्यात् बन्धुर्भवति । परानभिमतदानकरणात् शत्रुत्वेऽपि लज्जया पुण्यकारयितृत्वेन बन्धुत्वम् ॥१८८॥

एकपाद् भूयो द्विपदो वि चक्रमे द्विपात् त्रिपादमभ्येति पश्चात् ।
चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः ॥१८९॥
(१०.११७.८)

पादशब्दो भागवचनः। एकपात् एकभागधनः पुरुषः द्विपदः द्विगुणधनस्य पुंसः मार्गं [भूयः] भूयसा कालेन वि चक्रमे विविधं गच्छति प्राप्नोति। तथा [द्विपात्] द्विभागधनः त्रिपादं त्रिभागधनं पुरुषं पश्चात् अभ्येति [अभिगच्छति]। चतुष्पात् चतुर्भागधनस्तु द्विपदां, बहुवचनादेकपादादयः उपलक्ष्यन्ते, एकपादधनादीनाम् अभिस्वरे निकटे पङ्क्तीः क्रमान् सम्पश्यन् उपतिष्ठमानः गच्छमानः एति। अन्योऽन्यापेक्षया सर्वेषामेवाधिकधनत्वेन धनगर्वं मा कृथाः किन्तु प्रयच्छेत्यर्थः ॥१८९॥

समौ चिद्धस्तौ न समं विविष्टः संमातरा चिन्न समं दुहाते।

यमयोश्चिन्न समा वीर्याणि ज्ञाती चित् सन्तौ न समं पृणीतः ॥

॥१९०॥ (१०.११७.९)

समौ चित् समावपि हस्तौ समं समानकार्यं न विविष्टः न व्याप्नुतः। (विष्लृ व्याप्तौ।) संमातरा चित् समानमातरावपि धेनू समं न दुहाते। यमयोश्चित् सहजातयोरपि समा समानानि वीर्याणि न सन्ति। ज्ञाती चित् ज्ञाती एव सन्तौ [अपि] न समं पृणीतः न समं ददतः। तस्माद्यस्य धनमस्ति स दद्यादेवेत्यर्थः ॥१९०॥

अद्धीदिन्द्र प्रस्थितेमा हवींषि चनो दधिष्व पचतोत सोमम्।

प्रयस्वन्तः प्रति हर्यामसि त्वा सत्याः सन्तु यजमानस्य कामाः॥१९१॥

(१०.११६.८)

हे इन्द्र [प्रस्थिता] प्रस्थितानि उत्तरवेदिं प्रति इमा इमानि (उभयत्र डादेशः) हवींषि अद्धि इत् भक्षय। इदवधारणे। चन इत्यन्ननाम [तत्] दधिष्व धारय उदरे प्रक्षिप। उतापि च सोमं पचत पिब (!)। प्रयस्वन्तः प्रयोऽन्नं तद्वन्तो वयं त्वा त्वां प्रति हर्यामसि कामयामहे धनादीनि। यजमानस्य कामाः सत्याः सन्तु ॥१९१॥

मुञ्चामि त्वा हविषा जीवनाय कमज्ञातयक्ष्मादुत राजयक्ष्मात्।

ग्राहिर्जग्राह यदि वैतदेनं तस्या इन्द्राग्नी प्र मुमुक्तमेनम् ॥१९२॥

(१०.१६१.१)

प्राजापत्या यक्ष्मनाशनी। हे यक्ष्माभिभूत अनेन हविषा त्वाम् [अज्ञातयक्ष्मात्] अज्ञातरोगात् राजयक्ष्मात् क्षयादपि मुञ्चामि। जीवनाय कं जीवनार्थम्। कमिति पूरकः। हे इन्द्राग्नी एतत् एतस्मिन् समये यदि एनं व्याधितं ग्राहिः [ग्रहरूपा] देवता जग्राह तस्याः सकाशात् एनं प्र मुमुक्तं प्रमोचयतम् ॥१९२॥

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव।
तमा हरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय ॥१९३॥
(१०.१६१.२)

यत् अयं रोगेण ग्रस्तः क्षितायुः क्षीणायुः, यदि अस्माल्लोकात् वा परेतः गतः, यदि वा मृत्योः अन्तिकं नीतः एव भवति, एवंभूतम् एतं निर्ऋतेः पापदेवतायाः उपस्थात् समीपात् आ हरामि आवर्तयामि। शतशारदाय शतवर्षायुषे एनम् अस्पार्षं मन्त्रेण स्पृष्टवानस्मि (?) ॥१९३॥

सहस्राक्षेण शतशारदेन शतायुषा हविषाहार्षमेनम्।
शतं यथेमं शरदो नयातीन्द्रो विश्वस्य दुरितस्य पारम् ॥१९४॥
(१०.१६१.३)

सहस्राक्षेण। सहस्रमिति बहुनाम। सहस्रशोऽक्षीणि चक्षूंषि यस्य हविषः फलत्वेन विद्यन्ते तत् सहस्राक्षम् (बहुव्रीहौ सक्थ्यक्ष्णोः (पा. ५.४.११३) इति षच्)। शरदः सम्बन्धी शारदः संवत्सरः। शतं शारदा यस्य तत्तथोक्तम्। (बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्।) अत एव शतायुषा शतसंवत्सरपरिमितमायुः जीवनं फलभूतं यस्य तादृशेन हविषा यक्ष्मगृहीतम् [एनम्] तथा आहार्षं रोगादनैषं यथा येन प्रकारेण इन्द्रः इमं पुरुषं शतं शरदः संवत्सरान् (अत्यन्तसंयोगे द्वितीया) विश्वस्य सर्वस्य दुरितस्य दुःखस्य पारम् अवसानं दुःखादिराहित्यं नयाति नयेत्, तथा आहार्षमित्यर्थः ॥१९४॥

शतं जीव शरदो वर्धमानः शतं हेमन्ताञ्छतमु वसन्तान्।
शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः ॥१९५॥
(१०.१६१.४)

हे राजयक्ष्माद्विमुक्त वर्धमानः अहरहः वृद्धिं प्राप्नुवन् त्वं [शतं] शरदः शरदृतून् जीव। शतं हेमन्तान् हेमन्तऋतूंश्च जीव। शतं वसन्तान्। उशब्दः समुच्चये। अपि च [इन्द्राग्नी] इन्द्रश्चाग्निश्च सविता प्रेरको देवश्च बृहस्पतिः बृहतां देवानां पालयिता देवश्च शतायुषा शतसंवत्सरपरिमितस्य आयुषः हेतुभूतेन हविषा तर्प्यमाणाः सन्तः इमं जनं पुनः दुः पुनरस्मभ्यं प्रादुः ॥१९५॥

आहार्षं त्वाविदं त्वा पुनरागाः पुनर्नव।

सर्वाङ्ग सर्वं ते चक्षुः सर्वमायुश्च तेऽविदम् ॥१९६॥

(१०.१६१.५)

हे व्याधिगृहीत त्वा त्वाम् आहार्षं मृत्योः सकाशात् आहृतवानस्मि। अत एव त्वा त्वाम् अविदम् अलप्सि। हे पुनर्नव पुनरभिनव पुनरागाः पुनरस्मत्समीपमागच्छ। हे सर्वाङ्ग सर्वैरङ्गैरुपेत ते सर्वं चक्षुः। उपलक्षणमेतत्। इन्द्रियवर्गं सकलमपि [अविदम्] लब्धवानस्मि। तेन च आयुः जीवितं सम्पूर्णमविदम् ॥१९६॥

आ त्वाहार्षमन्तरेधि ध्रुवस्तिष्ठाविचाचलिः।

विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥१९७॥

(१०.१७३.१)

हे राजन् त्वा त्वाम् आहार्षम् अस्य राष्ट्रस्य [स्वामित्वेनानैषम्। स त्वम्] अन्तः अस्य मध्ये एधि स्वामी भव। ध्रुवः नित्यः सन् अविचाचलिः अतिशयेन चलनरहित एव सन् तिष्ठ राष्ट्रमधितिष्ठ। सर्वाः विशः प्रजाः त्वां वाञ्छन्तु अयमेव सदास्माकं राजाऽस्त्विति कामयन्तु (वाछि इच्छायाम्)। त्वत् त्वत्तः सकाशाद्राष्ट्रं राज्यं मा अधि भ्रशत् मा भ्रश्यतु मा वियुक्तं भवतु (भ्रन्शु अधःपतने) ॥१९७॥

इहैवैधि माप च्योष्ठाः पर्वतइवाविचाचलिः।

इन्द्रइवेह ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥१९८॥ (१०.१७३.२)

हे राजन् इहास्मिन्नेव राज्ये एधि स्वामित्वेन सर्वदा वर्तमानो भव। मा अप च्योष्ठाः अपच्युतो मा भूः। पर्वतइव यथा पर्वतो निश्चलत्वेनावतिष्ठते एवम् अविचा-

चलिः चलनरहितो भव । इन्द्रइव यथा स्वर्गे इन्द्रः एवम् इह लोके त्वम् अवतिष्ठ स्थिरो भव । राष्ट्रमु राष्ट्रं च इह लोके धारय स्वे स्वे कर्मण्यवस्थापय ॥१९८॥

इमममिन्द्रो अदीधरद् ध्रुवं ध्रुवेण हविषा ।

तस्मै सोमो अधि ब्रवत् तस्मा उ ब्रह्मणस्पतिः ॥१९९॥

(१०.१७३.३)

इमम् अभिषिक्तं ध्रुवेण स्थिरेण हविषा तर्प्यमाणः इन्द्रः ध्रुवं स्थिरम् अदीधरत् धारयतु । सोमः तस्मै राज्ञे अधि ब्रवत् ब्रवीतु मदीयोऽयमिति पक्षपातवचनं करोतु तस्मा उ तस्मा एव ब्रह्मणस्पतिः मन्त्रस्य पालको देवश्च अधिब्रवीतु ॥१९९॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवासः पर्वता इमे ।

ध्रुवं विश्वमिदं जगद् ध्रुवो राजा विशामयम् ॥२००॥

(१०.१७३.४)

यथा द्यौः ध्रुवा स्थिरा भवति। पृथिवी [च] ध्रुवा स्थिरा भवति। इमे दृश्यमानाः पर्वताः महीधराश्च ध्रुवासः स्थिराः। इदं विश्वं सर्वं जगत् ध्रुवं स्थिरं भवति । एवमेव विशां प्रजानां राजा स्वामी सन् अयं ध्रुवः स्थिरो भवतु ॥२००॥

ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।

ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥२०१॥

(१०.१७३.५)

हे राजन् ते तव राष्ट्रं राजा राजमानः ध्रुवं स्थिरं वरुणः । ध्रुवं देवः बृहस्पतिः । ध्रुवम् इन्द्रः च ध्रुवम् अग्निश्च ध्रुवं ते धारयताम् ॥२०१॥

ध्रुवं ध्रुवेण हविषाभि सोमं मृशामसि ।

अथो त इन्द्रः केवलीर्विशो बलिहृतस्करत् ॥२०२॥

(१०.१७३.६)

ध्रुवेण स्थिरेण हविषा पुरोडाशादिना युक्तं ध्रुवं स्थिरं सोमम् [अभि] मृशामसि तवाभ्युदयार्थं देवतायै अभिमृशामः [संस्पृशामः] देवताम् अभिलक्ष्य दद्मः। अथो

यागानन्तरमेव इन्द्रः विशः प्रजाः ते तवैव केवलीः असाधारणाः सतीः ( केवलमामक० (पा. ४.१.३०) इति ङीप् ) बलिहृतः करस्य प्रदात्रीः करत् करोतु ॥२०२॥

अपश्यं त्वा मनसा चेकितानं तपसो जातं तपसो विभूतम् ।

इह प्रजामिह रयिं रराणः प्र जायस्व प्रजया पुत्रकाम ॥२०३॥

(१०.१८३.१)

हे यजमान त्वा त्वां मनसा बुद्ध्या अहम् अपश्यम् अदर्शम् । कीदृशं, चेकितानं कर्माणि भृशं जानन्तम् तपसः दीक्षारूपाद् व्रतात् जातं पुनरुत्पन्नं यद्वा जन्मान्तरानुष्ठितात् सुकृतादुत्पन्नं तपसः अनुष्ठीयमानाद्यज्ञात् विभूतं सर्वत्र प्रख्यातम् । हे पुत्रकाम पुत्रान् कामयमान इह अस्मिन् लोके प्रजां पुत्रपौत्रादिरूपां रराणः रमयन् रयिं धनं च इह अस्मिन् लोके रमयन् प्रजया प्रजनेन प्र जायस्व प्रजाः उत्पादयस्व । पुत्रादिरूपेणोत्पद्यस्व प्रजा उत्पादयेत्यर्थः ॥२०३॥

अपश्यं त्वा मनसा दीध्यानां स्वायां तनू ऋत्व्ये नाधमानाम् ।

उप मामुच्चा युवतिर्बभूयाः प्र जायस्व प्रजया पुत्रकामे ॥२०४॥

(१०.१८३.२)

हे युवति दीध्यानां दीप्यमानां स्वायाम् आत्मीयायां तनू तन्वां शरीरे ऋत्व्ये, ऋतुकाले भवं गर्भधारणरूपं कर्म ऋत्वियं, तस्मिन् निमित्तभूते, नाधमानां भर्तुरुपगमनं याचमानां त्वां मनसा बुद्ध्या अपश्यम् अद्राक्षम् । हे पुत्रकामे पुत्रान् कामयमाने मामुप मत्समीपमेव प्राप्य सा त्वम् उच्चा उच्चैः भृशं युवतिः तरुणी बभूयाः भूयाः । (छन्दस्युभयथेति शप् ।) युवतिर्भूत्वा च प्रजया प्रजनेन प्र जायस्व पुत्राद्यान् प्रसूष्व । (जनी प्रादुर्भावे । प्रादुर्भावः प्राकट्यमित्यर्थः) ॥२०४॥

**इति श्रीमन्नारायणभट्टात्मजरामकृष्णभट्टसुतदिनकरभट्टकृते मन्त्रविभागान्तर्गतऋगर्थसारे अष्टमाष्टकान्तर्गतऋग्व्याख्या समाप्ता ॥**

# मन्त्रसूची

---

# SANSKRIT ACADEMY SERIES

*General Editor*
Dr. ARYENDRA SHARMA, M.A., D.Phil.,
Professor of Sanskrit, Osmania University,
and Director of the Sanskrit Academy.

**PUBLISHED**

1. JÑĀNACATURVIṀŚĪ of Naracandropādhyāya (An early work on Astronomy-Astrology, published for the first time) *Price Rs. 1.50*

2. PAṆḌITARĀJA - KĀVYA - SAṄGRAHA (Complete Poetical Works of Paṇḍitarāja Jagannātha, publised for the first time in a single volume) *Price Rs. 6.00, bound Rs. 8.00*

3. STORIES FROM KATHĀSARITSĀGARA (in English) *Price Rs. 2.00*

4. ṚGARTHASĀRA
   (An unpublished commentary on selected verses of the Ṛgveda)
   Part I — Mantras and Commentary. *Price Rs. 2.50*

   Part II — English Translation with Grammatical and Exegetical Notes. (To be published.)

5. GEMS FROM SANSKRIT LITERATURE (Selected maxims, with translation in English). *Price Rs. 1.50*

## IN PRESS

6. SAṀSKṚTA-KAVI-JĪVITAM (Lives of Sanskrit Poets and Authors, in Sanskrit), by Pt. Malladi Suryanarayana Shastri.

7. A DESCRIPTIVE CATALOGUE OF SANSKRIT MANUSCRIPTS IN THE OSMANIA UNIVERSITY LIBRARY, Vol. I (Vedic Literature). Compiled by Shri K. Sitaramaiya, M.A.

8. KRIYĀSVARALAKṢAṆAM=YOHIBHĀṢYAM (A treatise on Vedic Accent, published for the first time). Edited by Dr. Aryendra Sharma and Shri K. Sitaramaiya.

## UNDER PREPARATION

9. A DESCRIPTIVE CATALOGE OF SANSKRIT MANUSCRIPTS IN THE OSMANIA UNIVERSITY LIBRARY, Vol. II (Jyautiṣa, Vaidyaka, Kāvya, Alaṁkāra etc.). Compiled by Shri K. Sitaramaiya, M.A.

10. A HISTORICAL GRAMMAR OF SANSKRIT, by Dr. Aryendra Sharma.

11. A COMPANION TO CLASSICAL SANSKRIT LITERATUCE (A comprehensive reference book, containing all necessary information concerning works, authors, allusions etc.)

12. MADANARATNAPRADĪPA—DĀNODYOTA (An important and extensive digest on Dharmaśāstra).

---